(गोधूमाः)(परीवापस्य) हविष्पंक्तेः रूपम्(वदरम्) सर्ववदरीफलं(सक्तूनाम्)(रूपम्)(उपवाकाः) यवाः(करम्भस्य) रूपंज्ञेयं॥२२॥ अथाध्यात्मम्–(कुवलम्) पक्ष्माणि। पक्ष्माणि कुवलसक्त वभ्र श० १२।८।३।५(धानानां) भृष्टधानानां(रूपम्)(गोधूमाः) पक्ष्माणि। पक्ष्माणि गोधूमसक्त वभ्र श० ५(परीवापस्य) हविष्पंक्ते रूपम्(वदरम्) नासिकयोर्लोमानि। यानि नासिकयोर्लोमानि तानि वदरसक्त वभ्र श० १२।८।३।५(सक्तूनाम्)(रूपम्)(उपवाकाः) नासिकयोर्लोमानि। यानि नासिकयोर्लोमानि तान्युपवाक्सक्त वभ्र श० ५(करम्भस्य) रूपम्॥२२॥

(यत्)(यवाः) ते(पयसः)(रूपम्)(कर्कन्धूनि) स्थूलवदराणि(दध्नः)(रूपम्)(वाजिनम्)(सोमस्य)(रूपम्)(आमिक्षा)

**पयसो रूपं यद्यवा दध्नो रूपङ्कर्कन्धूनि। सोमस्य रूपं वाजिनꣳ सौम्यस्य रूपमामिक्षा॥२३॥ आश्रावयेति स्तोत्रियाः प्रत्याश्रावो अनुरूपः। यजेति धाय्या रूपम्प्रगाथा येयजामहाः॥२४॥**

पयस्या(सौमस्य) चरोः(रूपम्) ज्ञेयम्॥२३॥ अथाध्यात्मम्–(यत्)(यवाः) कर्णयोर्लोमानि यानि कर्णयोर्लोमानि तानि यवसक्त वभ्र श० १२।८।३।६ ते(पयसः)(रूपम्)(कर्कन्धूनि) भ्रुवोर्लोमानि। यानि भ्रुवोर्लोमानि तानि कर्कन्धुसक्त वभ्र श० ६(दध्नः)(रूपम्)(वाजिनम्) रागरूपरसः(सोमस्य)(रूपम्)(आमिक्षाः) निरुद्धेन्द्रियसमूहः(सौम्यस्य) चरोः(रूपम्) ज्ञेयम्॥२३॥ शास्त्रसम्पत्तिमाह(आश्रावय)(इति) शब्दः(स्तोत्रियाः) स्तोत्रेप्रथमस्तृचो ऽनुवाकः ज्ञेयः(प्रत्याश्रावः) अस्तु श्रौषडिति शब्दः(अनुरूपः) उत्तरस्तृचः तद्रूपः(यज)(इति) शब्दः

(धय्या रूपम्) निष्केवल्यं स्तोत्रियानुरूपयोरनन्तरं धय्या शस्य ते सा ज्ञेया (येयजामहाः) ये यजामह इति शब्दः (प्रगाथाः) प्रगाथरूपत्वेन ध्येयः ॥ २४॥ **अथाध्यात्मम्** – (आश्रावय) महावागोपदेशं कुरु (इति) स्तुत्या सह गुरोः प्रार्थना (स्तोत्रियाः) (प्रत्याश्रावः) गुरूपदेशः (अनुरूपः) (यज) आत्म प्रति विंबं यज (इति) गुरो राज्ञा (धय्या रूपम्) (येयजामहाः) येयजामह इति संकल्पः (प्रगाथाः) ॥ २४॥ (अर्द्धऋचैः) अर्चत्यैरर्द्धर्चैः। पुंसि चेति पुंस्त्वम् ऋरत्यक इति ऋकारस्य सन्ध्यभावः (उकथानाम्) शस्त्रविशेषाणां (रूपम्) (आप्यते) (पदैः) (निविदः) न्यूङ्खान् मंत्रान् (आप्नोति) (प्रणवैः) ओङ्कारैः (शस्त्राणाम्) (रूपम्) (पयसा) दुग्धेन (सोमः) आप्यते ॥ २५॥

अर्द्धऋचैरुकथानाᳬं रूपम्पदैराप्नोति निविदः। प्रणवैः शस्त्राणाᳬं रूपम्पयसा सोम आप्यते ॥ २५॥ आश्विभ्याम्प्रातः सवनमिन्द्रेणैन्द्रम्माध्यन्दिनम्। वैश्वदेवᳬं सरस्वत्यातृतीयमाप्तᳬं सवनम् २६

**अथाध्यात्मम्** – (अर्द्धऋचैः) अर्द्धस्तुतियोग्यैरिन्द्रियैः (उकथानाम्) (रूपम्) (आप्यते) (पदैः) बुद्धेर्व्यवसायैः (निविदः) (आप्नोति) (प्रणवैः) (शस्त्राणां) (रूपम्) (पयसा) प्राणेन। प्राणः पयः ६।५।४।१५ (सोमः) आत्मप्रतिविंब आप्यते) २५॥ सवनसम्पत्तिमाह (अश्विभ्याम्) (प्रातः सवनम्) (इन्द्रेण) (ऐन्द्रम्) ऐन्द्रदेवत्यं (माध्यन्दिनम्) सवनं (सरस्वत्या) देवतया कृत्वा (वैश्वदेवम्) विश्वदेवदेवत्यं (तृतीयम्) (सवनम्) (आप्तᳬं) प्राप्तम् ॥ २६॥

**अथाध्यात्मम्** – (अश्विभ्याम्) नरनारायणाभ्याम् (प्रातः सवनम्) (इन्द्रेण) महाविष्णुना (ऐन्द्रम्)·



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

महाविष्णुदेवत्यं (माध्यन्दिने) सवनं (सरस्वत्या) मह्या वाचा (वैश्व देवम्) विश्व देव देवत्यं (तृतीयं) (सवनम्) (आप्तम्) आप्तं भवति॥२६॥ (वायव्यैः) (वायव्यानि) पात्राणि (आप्नोति) (सतेन) वैतस पात्रेण (द्रोण कलशम्) कुम्भीभ्याम्) शत छिद्राभ्यां सुराधानीभ्यां (अम्भृणौ) पूतभृदाधवनीयौ (सुते) अभिषुते सोमेऽप्याप्नोति (स्थालीभिः) (स्थालीः) (आप्नोति)॥२७॥ **अथाध्यात्मम्**-(वायव्यैः) इन्द्रिय गोलकैः (वायव्यानि) पात्राणि (आप्नोति) (सतेन) हृदयेन (द्रोण कलशम्) (कुम्भीभ्याम्) लिंग गुदाभ्याम् (अम्भृणौ) (सुते) संस्कृते प्रति बिंबे। आप्नोति (स्थालीभिः) कमलैः (स्थालीः) (आप्नोति)॥२७॥ (यजुर्भिः) (ग्रहाः) (आप्यन्ते) (ग्रहैः) (स्तोमाः) (च) (विष्टुतीः) विविध स्तुतीः प्राप्यन्ते

**वायव्यैर्वायव्यान्याप्नोति सतेन द्रोण कलशम्। कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति॥२७॥ यजुर्भिराप्यन्ते ग्रहा ग्रहैः स्तोमाश्च विष्टुतीः। छन्दोभिरुक्था शस्त्राणि साम्नावभृथ आप्यते २८**

(छन्दोभिः) (उक्था) उक्थानि (शस्त्राणि) चाप्यंते (साम्ना) (अवभृथः) (आप्यते)॥२८॥

**अथाध्यात्मम्**-(यजुर्भिः) मनो वृत्तिभिः। मनो यजुर्वेदः श॰ १४।४।३।१२ (ग्रहाः) चक्षुश्श्रोत्राद्यङ्गानि। अङ्गानि वै ग्रहाः श॰ ४।५।९।११ (आप्यन्ते) (ग्रहैः) वागादिभिः (स्तोमाः) (च) (विष्टुतीः) प्राप्यन्ते (छन्दोभिः) वाग्वृत्तिभिः। वागेवऋग्वेदः १४।४।३।१२ (उक्था) (शस्त्राणि) चाप्यन्ते (साम्ना) प्राणेन। प्राणः सामवेदः १४।४।३।१२ (अवभृथः) आत्मनद्यां स्नानं (आप्यते)॥२८॥ (इडाभिः) (भक्षान्) (आप्नोति) (सूक्तवाकेन) (आशिषः) (शम्युना) होम विशे

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

षेण (पत्नीसंयाजान्) (समिष्टयजुषा) (संस्थाम्) आप्नोति॥२८॥ **अथाध्यात्मम्** - (इडाभिः) प्राणैः। अन्नं हि प्राणः श० ३।८।४।८ (भक्षान्) (आप्नोति) (सूक्तवाकेन) परमेश्वरस्य स्तोत्रेण वा (आशिषः) प्रार्थनाः (शम्युना) विषय होमेन (पत्नीसंयाजान्) उरू वाहून् द्वौ वाहू द्वाऽउरू। तऽएव चत्वारः पत्नीसंयाजाः श० ११।१।६।३३ (समिष्टयजुषा) पद्भ्यां। द्वौ पादौ वेवास्य समिष्टयजुः श० ११।२।५। (संस्थाम्) आप्नोति॥२९॥

(व्रतेन) (दीक्षाम्) (आप्नोति) (दीक्षया) (दक्षिणाम्) (आप्नोति) (दक्षिणा) दक्षिणया। विभक्तिलोपः (श्रद्धाम्) आस्तिक्य वुद्धिं। श्रत् सत्यं धीयते यस्यां सा श्रद्धा (श्रद्धया) (सत्यम्) ज्ञानमनन्तं ब्रह्म (आप्यते) प्राप्यते॥३०॥

**इडाभिर्भक्षानाप्नोति सूक्तवाकेनाशिषः। शंयुना पत्नीसंयाजान्त्समिष्टयजुषा सꣳस्थाम्॥२९॥ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥३०॥**

(यज्ञस्य) (एतावत्) एतत्परिमाणं (रूपम्) (यत्) (देवैः) (ब्रह्मणा) प्रजापतिना (कृतम्) दृष्टम्। दर्शनकरणयोको भेदः सुप्तमति वुद्धन्यायो दर्शनं वुद्धिपूर्वं तु करणम् (सौत्रामणी) सौत्रामण्यां। सप्तम्येकवचनस्य पूर्वसवर्णदीर्घः (यज्ञे) (सुते) सुरासोमेऽभिषुते सति (तत्) (एतत्) सोमयागरूपम् (सर्वम्) (आप्नोति)॥३१॥

अध्वर्युस्त्रीनपि पयोग्रहान् सहैव जुहोति का० १९।३।८ ओं सुरावन्तमित्यस्य हैमवर्चिर्ऋषिस्त्रिष्टुप् छन्दोऽश्विसरस्वतीन्द्रा देवताः १ **मंत्रार्थः** - (नमोभिः) यज्ञैः। यज्ञो नमः श० १२।७।३।२ (दिवि) स्वर्गे (देवतासु)



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(महिषाः) महान्तः
(सोमम्) (दधानाः) धारयन्तः ऋत्विजः। ऋत्विजो वै महिषाः १२। ८। १। २ (बर्हिषदम्) बर्हिषि सीदन्तीति देवा यत्र सर्वर्हिषत्तम् (सुरावन्तं) सुरा विद्यते यत्र तं (सुवीरं) शोभनर्त्विजम् (यज्ञम्) सौत्रामणी संज्ञं (हिन्वन्ति) वर्धयन्ति प्रापयन्ति वा (स्वर्काः) शोभन मंत्राः शोभनान्ना वा तथा (इन्द्रम्) (यजमानाः) यजन्तो वयम् (मदेम) हृष्येम ॥ ३२॥

अथाध्यात्मम् — (नमोभिः) योग यज्ञैः (दिवि) गगन मंडले (देवतासु) ब्रह्म परा महानारायणेषु (सोमम्) आत्मप्रति बिंबं (दधानाः) (महिषाः) वागाद्यृत्विजः (बर्हिषदम्) मानस कमले विद्यमानं। अयं लोको बर्हिः श० १। ४। १। २४

एतावद्रूपम् यज्ञस्य यद्देवैर्ब्रह्मणा कृतम्। तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते॥ ३१॥ सुरावन्तम्बर्हिषदꣳ सुवीरं यज्ञꣳ हिन्वन्ति महिषा नमोभिः। दधानाः सोमन्दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः॥ ३२॥ यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मः सुरया सुतस्य। तेन जिन्व यजमानम्मदेन सरस्वतीमश्विनाविन्द्रमग्निम्॥ ३३॥

(सुरावन्तं) भूतात्म शक्त्या संयुक्तं। शरीरꣳ सुराग्रहाः १२। ७। ३। १६ (सुवीरं) निरुद्ध प्राणवन्तं। प्राणा वै दश वीराः श० १२। ८। १। २२ (यज्ञम्) आत्मरूप यजमानं। यजमानो यज्ञः श० १३। २। २। १ (हिन्वन्ति) वर्धयन्ति (स्वर्काः) शुभ यज्ञवन्ताः। अर्को वै देवानामन्नमन्नं यज्ञः श० १२। ८। १। २ तथा (इन्द्रम्) महाविष्णुं (यजमानाः) वयं वागाद्यृत्विजः (मदेम) ब्रह्मानन्दं प्राप्नुयाम ॥ ३२॥ प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान्दक्षिणेऽग्नौ यजति तस्य मंत्रः का० १९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

३।९ ओं यस्त इत्यस्य हैमवर्चिर्ऋषिरार्षी त्रिष्टुप् छन्दः सुरा देवता १ **मंत्रार्थः** – हे सुरे (ओषधीषु) वर्त्तमानः (ये) (ते) तव (रसः) (सम्भृतः) एकीकृतः (सुरया) सह (सुतस्य) अभिषुतस्य (सोमस्य) यः (शुष्मः) बलं (तेन) (मदेन) मदजनकेन (यजमानं) (सरस्वतीम्) (अश्विनौ) (इन्द्रम्) (अग्निम्) (जिन्व) प्रीणीहि॥ ३३॥

**अथाध्यात्मम्** – हे भूतात्मन् (ओषधीषु) इन्द्रियेषु वर्त्तमानः। ओषधयो वै देवानां पत्न्यः श० ६।५।४।४ (ये) (ते) (रसः) (सम्भृतः) एकीकृतः (सुरया) देहेन सह (सुतस्य) अभिषुतस्य (सोमस्य) आत्मप्रतिविंबस्य यः (शुष्मः) योगबलं (तेन) (मदेन) (यजमानम्) आत्मानं। आत्मा वै यज्ञस्य यजमानः श० ९।५।२।१६ (सरस्वतीम्) महावाचं-

यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय। इमन्तꣳ शुक्रम्मधुमन्तमिन्दुꣳ सोमꣳ राजानमिह भक्षयामि॥ ३४॥

(अश्विनौ) नरनारायणौ (इन्द्रम्) महाविष्णुं (अग्निम्) ब्रह्माग्निं (जिन्व) प्रीणीहि॥ ३३॥

अध्वर्यु प्रतिप्रस्थाताग्नीध्रा आश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति होत्र ब्रह्म मैत्रावरुणाः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहमत्ति तस्य मंत्रः का० १९।३।२०–२३ ओं यमित्यस्य हैमवर्चिर्ऋषिरार्षी त्रिष्टुप् छन्दोऽश्वि सरस्वत्यः देवताः **मंत्रार्थः** – (अश्विना) अश्विनौ (सरस्वती) (यम्) सोमं (आसुरात्) असुरपुत्रात् (नमुचेः) (अधि) सकाशात् (इन्द्रियाय) इन्द्रस्य वीर्य्याय भैषज्या यवा (असुनोत्) अभ्यषुणोत् (इमम्) (तम्) (शुक्रम्) शुद्धं सुरारूपेण पृथग्भूतं (मधुमन्तं) रसवन्तं (इन्दुम्) परमैश्वर्यप्रदं। इदि परमैश्वर्ये (राजानम्) (सोमम्) (इह) यज्ञे (भक्षयामि)॥ ३४॥





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**अथाध्यात्मम्** – (अश्विना) नरनारायणौ (सरस्वती) महावाक् (यम्) आत्मप्रतिबिंबं (आसुरात्) (नमुचेः) पापात् पाप्मावेन मुक्तिः श० १२।७।३।४ (अधि) सकाशात् (इन्द्रियाय) मम यजमानस्य बलाय (असुनोत्) अभ्यषुणोत् देहाभिमानरहितं कृतवान् (इमम्) (तम्) (शुक्रम्) शुद्धं (मधुमन्तं) ज्ञानवन्तं। इदम्वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच श० १४।५।५।१६ (इन्दुम्) योगैश्वर्यप्रदं (राजानम्) दीप्तिमन्तं (सोमम्) आत्मप्रतिबिंबं (सोमी वै ब्रा॰) श० ३।२।४।९ (इह) यज्ञे ऽहमात्मा (भक्षयामि) ॥ ३४ ॥

प्राचीनावीतिनो दक्षिणे स्थिता अध्वर्य्यादय आश्विनं होत्रादयः सारस्वतं यजमान ऐन्द्रं सुराग्रहं भक्षयन्ति का० १९।३

**यदत्र रिप्तथं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। अहन्तदस्यमनसा शिवेन सोमथं राजानमिह भक्षयामि ॥ ३५ ॥**

२४ ओं यदत्रेत्यस्य हैमवर्चिर्ऋषिर्ब्राह्म्युष्णिक् छन्दो यजमानो देवता १ **मंत्रार्थः** (रसिनः) रसवतः (सुतस्य) अभिषुतस्य सोमस्य (यत्) यो भागः (अत्र) सुरायाम् (रिप्तं) लिप्तं लग्नं (यत्) सुरालग्नं सोमांशं (शचीभिः) कर्मभिः शुद्धं कृत्वा (इन्द्रः) (अपिबत्) (अस्य) सोमस्य (तत्) सुरानिर्गतं (राजानम्) (सोमम्) (शिवेन) (मनसा) (इह) यज्ञे (अहम्) (भक्षयामि) यथा श्रुतिः इन्द्रस्य वै यत्र इन्द्रियाणि वीर्याणि व्युदक्रामंस्तानि देवा एतेनैव यज्ञेन पुनः समदधुर्युस्तयो ग्रहाश्च सुराग्रहाश्च गृह्यन्ते ऽ इन्द्रियाण्येवास्मिंस्तद्वीर्याणि पुनः संदधाति १८।८।१।१—॥ ३५ ॥

**अथाध्यात्मम्** – (रसिनः) ज्ञानरसवतः (सुतस्य) देहाभिमानरहितात्मप्रतिबिंबस्य (यत्) यो भागः (अत्र)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

देहे[5](रिसम्) लिप्तं[6](यत्) देह लग्न मात्मप्रति विंबं[7](शचीभिः) योगक्रियाभिः शुद्धं कृत्वा[8](इन्द्रः) आत्मरूप यजमानः[9](आपिबत्) [10](अस्य) आत्मप्रति विंबस्य[11](तत्) देहाभिमान रहितं[12](सोमम्) अमृतं[13](शिवेन)[14](मनसा)[15](इह) यज्ञे[16](अहम्) आत्मा[17](भक्षयामि)॥३५॥ आह वनीयस्याङ्गारेषु परिधेर्वहिर्दक्षिणा दिक्स्थेषु होम शेषान् सुराग्रहान् पितृभ्य इति प्रति मन्त्रं जुहोति तदेवाह उत्तरेऽङ्गारे आश्विनं मध्यमे सारस्वतं दक्षिणा ऐन्द्रं सुराग्रहं जुहोति तस्य मंत्राः का० १९।३।१७ सौर ग्रह होम पात्र क्षालन जलेन यथास्व मङ्गारान् सिञ्चति तस्य मंत्रः का० १९।३।१८ जपमंत्रः का० १९।३।२० ओंपितृभ्य इत्यस्य हैम वर्चिर्ऋषि र्याजुषी गायत्री छन्दः पितरो देवताः१ ओंपितामहेभ्य इत्यस्य हैम वर्चिर्ऋषि रासुर्यनुष्टुप् छन्दः पितरो दे०२

**पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः**
**प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः अक्षन्पितरोऽमीमदन्त पितरो**
**ऽतीतृपन्त पितरः पितरः शुन्धध्वम्॥३६॥**

ओंप्रपितामहेभ्य इत्यस्य हैम वर्चिर्ऋषिः साम्न्यनुष्टुप् छं० पितरो दे० ३ ओं अक्षन्नित्यस्य हैम वर्चिर्ऋषि र्दैवी पंक्तिश्छन्दः पि० ४ ओं अमी + अतीतृपन्तेति मंत्रयो र्हैम वर्चिर्ऋषि र्याजुष्यनुष्टुप् छन्दः पितरो देवताः५,६ ओंपितर इत्यस्य हैम वर्चिर्ऋषि र्याजुषी गायत्री छन्दः पितरो देवताः७ **मंत्रार्थः**– मनसा शिवेनेति[1] पूर्व मंत्रे कथितं तस्य मनसः शिवत्व मूते पितृ तर्पणाद सम्भवं मनः पितर इति श्रुतेस्तस्मात् पितृ यज्ञ माह(स्वधायिभ्यः) स्वधामन्नं प्रति यन्ति गच्छन्तीति स्वधायिनस्तेभ्यः[2](पितृभ्यः) बहु वचनं पितृ व्याप्त्य पेक्षं[3](स्वधा) स्वधासंज्ञकं[4](नमः) अन्नमस्तु स्वधावै पितॄणामन्न



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मिति श्रुतेः यद्वा स्वधाऽन्नं नमः नमस्कारश्चास्तु [5](स्वधायिभ्यः) [6](पितामहेभ्यः) [7](स्वधा) [8](नमः) [9](स्वधायिभ्यः) [10](प्रपितामहेभ्यः) [11](स्वधा) [12](नमः) अस्तु [13](पितरः) [14](अक्षन्) भक्षितवन्तः। घस्लृ अदने लङि रूपम् [15](पितरः) [16](अमीमदन्त) तृप्ताः। मद तृप्तौ [17](पितरः) [18](अतीतृपन्त) तर्पिता अस्माभिः यद्वाऽस्मान तीतृपन्त तर्पयन्ति तृप्ताः सन्तोऽभीष्टदानेन हे [19](पितरः) [20](शुन्धध्वं) यूयं स्वपाणिप्रक्षालनेन शुद्धा भवत॥३६॥ दक्षिणाहृक्नीयपार्श्वयोः स्तम्भद्वयोपरि दक्षिणाग्रं वंशं निधाय तत्रस्थे शिक्ये शतच्छिद्रां कुम्भीं निधाय कुम्भीतले गोऽश्ववालकृतं सुरागलनं वालं तथाऽजाविलोमकृतं पयोगलनं पवित्रं तथा शतमानमितं हिरण्यं निधाय तत्र सुराशेषं सिक्त्वाग्नेरुपरि स्रुवन्त्यां सुरायां नर्वर्चं यज

**पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा। पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै।३७।**

मानं वाचयति तस्य मंत्रौ का० १९।३।३० ओं पुनन्त्वित्यस्य हैमवर्चिर्ऋषिरनुष्टुप् छन्दः पितरो देवताः १, २

**मंत्रार्थः** – [1](सोम्याः) सोमार्हाः [2](पितरः) [3](शतायुषा) पूर्णायुर्दात्रा [4](पवित्रेण) गोऽश्ववालकृतेन [5](मा) मां [6](पुनन्तु) शोधयन्तु [7](पितामहाः) [8](मा) [9](पुनन्तु) [10](प्रपितामहाः) [11](पुनन्तु) [12](पितामहाः) [13](शतायुषा) [14](पवित्रेण) [15](मा) [16](पुनन्तु) [17](प्रपितामहाः) [18](पुनन्तु) [19](विश्वम्) सर्वं [20](आयुः) [21](व्यश्नवै) व्याप्नवै प्राप्नुयाम्। अश्नूङ् व्याप्तौ लोट्। आदारार्थं पुनश्चिनम्॥३७॥ तृतीयो मंत्रः ओं अग्न इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता १

मंत्रार्थः - हे (अग्ने) त्वं (आयूंषि) त्वत एवायुः प्रापकाणि (पवसे) पावयसे चेष्टयसे। अनन्त भूत एयन्तः अतए-
व (नः) अस्मदर्थं (इषम्) व्रीह्यादि धान्यं (च) (ऊर्जम्) दध्यादि (आसुव) आपय देहि (आरे) दूरेऽपि स्थितानां (दु
च्छुनाम्) सारमेयप्रायान् दुर्जनान्। कर्मणि षष्ठी (बाधस्व) ताडय ॥ ३८॥ चतुर्थो मंत्रः ओं पुनन्त्वित्यस्य प्रजापति-
र्ऋषिरनुष्टुप् छन्दोऽग्न्याद्या देवताः१ मंत्रार्थः (देवजनाः) देवानुगामिनो जनाः (मा) मां (पुनन्तु) (मनसा)
सह (धियः) बुद्धिवृत्तयः मां (पुनन्तु) (विश्वा) विश्वानि सर्वाणि (भूतानि) मां (पुनन्तु) हे (जातवेदः) अग्ने त्वमपि

**अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः। आरे बाधस्व दुच्छुनाम्।३८**
**पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः**
**पुनीहि मा॥ ३९॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्र**
**तूँ२॥ रनु॥ ४०॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनातु मा।४१।**

(मा) मां (पुनीहि) ॥ ३९॥ ओं पवित्रेणेत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता१
मंत्रार्थः - हे (देव) (अग्ने) (दीद्यत्) दीप्यमानस्त्वं दिवि यड्लगन्तं रूपम् (शुक्रेण) शुक्लेन शुद्धेन (पवित्रेण)
(मा) मां (पुनीहि) (क्रतून्) यज्ञान् (अनु) अनु लक्ष्य (क्रत्वा) क्रतुना कर्मणा पुनीहि अस्माकं यज्ञान् सम्यक् कारय
॥ ४०॥ ओं यत्त इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो ब्रह्माग्निर्देवता १ मंत्रार्थः - हे (अग्ने) (ते) तव (अर्चि-
षि) ज्वालायां (अन्तरा) मध्ये (यत्) (ब्रह्म) परब्रह्मरूपं (पवित्रं) (विततम्) विस्तृतं प्रसारितं (तेन) पवित्रेण (मा)



CC-0. In Public Domain Kavikulguru Kalidas Sanskrit University Ramtek Collection

मांभवान्(पुनातु)॥४१॥ ॐ पवमान इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वायुर्देवता १

**मंत्रार्थः** (यः)(विचर्षणिः) विविधंचष्टेस द्रष्टा कृता कृतज्ञः(पवमानः) शोधकः(सः) वायुः(नः) अस्माकं(पोता) शोधकः(सः)(अद्य)(पवित्रेण) आत्म रूपेण(मा) मां(पुनातु)॥४२॥ ॐ उभाभ्यामित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दः सूर्यो देवता १ **मंत्रार्थः** – हे(देव)(सवितः)(उभाभ्याम्) प्रज्ञाविलोम निर्मितेन(पवित्रेण)(च)(सवेन) अभ्यनुज्ञया(विश्वतः) सर्वतः(माम्)(पुनीहि)॥४३॥ ॐ वैश्वदेवीत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो

पवमानस्सोऽअद्यनः पवित्रेण विचर्षणिः। यः पोता सपुनातुमा॥४२॥

उभाभ्यान्देव सवितः पवित्रेण सवेनचामाम्पुनीहि विश्वतः॥४३॥

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा वह्व्यस्तन्वो वीतपृष्ठाः तयामदन्तस्सधमादेषु वयꣳस्याम पतयोरयीणाम्॥४४॥

वैश्वदेवी देवता १ **मंत्रार्थः** (देवी) नानावतारैः क्रीडनशीलस्य महानारायणस्य शक्तिः(पुनती) पावनं कुर्वती(वैश्वदेवी) सर्वेषां प्रकाशका परा शक्तिः(आगता) समन्तात्प्राप्ता(यस्याम्)(इमाः)(वह्व्यः) वहुसंख्याकाः(तन्वः) जीवात्मानः। आत्मा वैतनूरिति श्रुतेः(वीतपृष्ठाः) प्राप्तस्तोत्राभक्ताः(तया) परा शक्त्या(सधमादेषु) यज्ञस्थानेषु(मदन्तः) मोदमानाः सन्तः(वयम्)(रयीणाम्) धनानां योगैश्वर्याणाम्वा(पतयः)(स्याम) भवेम॥४४॥

स्रुचं गृहीत्वाज्यं दक्षिणेऽग्नौ प्राचीनावीती दक्षिणामुखो यजमानो जुह्वा जुहोति तस्य मंत्रः का० १९।३।२३

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ओं येस माना इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः पितरो देवता॥ **मंत्रार्थः** (ये) (समानाः) सपिण्डाः (समनसः) समनस्काः (पितरः) (यमराज्ये) यमलोके सन्ति (स्वधा) स्वधाख्यं (नमः) अन्नं (तेषाम्) पितॄणां (लोकः) दर्शन गोचरं भवतु (यज्ञः) पितृयज्ञः (देवेषु) वसुरुद्रादित्यादिदेवेषु (कल्पताम्) आप्त्र्यताम्॥ ४५॥

उत्तर वेद्या हवनीये कृत सव्यो यजमान अग्निमयां स्रुचाज्यं जुहोति तस्य मंत्रः का० १९।३।२४ ओं येस माना इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः श्रीर्देवता॥ **मंत्रार्थः** (ये) (जीवेषु) प्राणिषु मध्ये (समानाः) समदर्शिनः (

**येसमानाः समनसः पितरो यमराज्ये। तेषांल्लोकः स्वधानमो यज्ञो देवेषु कल्पताम्॥ ४५॥ येसमानाः समनसोजीवाजीवेषु मामकाः। तेषाᳬं श्रीर्मयि कल्पतामस्मिंल्लोके शतᳬं समाः॥ ४६॥ द्वेस्रुतीऽअशृणवम्पितॄणामहन्देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरम्मातरञ्च॥ ४७॥**

(समनसः) समनस्काः (मामकाः) मदीयाः सपिण्डाः (जीवाः) प्राणिनः पितरः (तेषाम्) (श्रीः) धनसम्पत्तिः (अस्मिन्) (लोके) (शतᳬं) (समाः) (मयि) (कल्पताम्) मामाप्त्र्यताम् तर्पणादि कर्म कर्त्तुम्॥ ४६॥

ऋत्विग्यजमानेषु कृतान्वारम्भेष्वध्वर्युः पयो जुहोति तस्य मंत्रः का० १९।३।२५ ओं द्वेस्रुतीत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो देवयानपितृयानमार्गौ देवते॥ **मंत्रार्थः** (अहम्) (मर्त्यानाम्) मनुष्याणां (देवानाम्) (उत) अपि च (पितॄणाम्)





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(द्वे)(सृती) द्वौ मार्गौ (अशृणवम्) श्रुतवानस्मि श्रुतितः (यत्) विश्वं (पितरम्) (च) (मातरम्) (अन्तरा) भूलोक द्युलोकयोर्मध्ये वर्त्तते तत् (इदम्) (एजत्) क्रियावत् (विश्वम्) (ताभ्याम्) देवयान पितृयानाभ्यां (समेति) सङ्गच्छते ताभ्यां सृतिभ्यां सुकृतमस्तु ॥ ४७ ॥ उखास्थितं शेषं पयो यजमानो भक्षयति तस्य मंत्रः का० १९।३।२६।

ओं इदमित्यस्य प्रजापतिर्ऋषिस्त्र्यवसाना ऽष्टिश्छन्दो यजमानाशीर्देवता १

मंत्रार्थः (इदम्) (प्रजननम्) प्रजोत्पादकं (दशवीरम्) दश प्राणानां स्वास्थ्य करं प्राणा वै दश वीराः श० १२।८

**इदꣳ हविः प्रजननम्मेऽअस्तु दशवीरꣳ सर्वगणं स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त॥ ४८॥ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः। असुं यऽईयुरवृकाऽऋतज्ञास्ते नोऽवन्तु पितरो हवेषु॥ ४९॥**

।१।२२ (सर्वगणम्) सर्वाङ्ग स्वास्थ्य जनकं। अङ्गानि वै सर्वे गणाः श० १२।८।१।२२ (आत्मसनि) आत्मनो दातारं। षणु दाने तुदादिः (प्रजासनि) सन्तति दातारं (पशुसनि) पशु दातारं (लोकसनि) ऐहिक सुख दातारं (अभयसनि) स्वर्गस्य दातारं। स्वर्गो वै लोको ऽभयं श० १२।८।१।२२ (हविः) (मे) मम (स्वस्तये) कल्याणाय (अस्तु) एवं हविः प्रार्थ्याग्निं (प्रार्थयते) (अग्निः) (मे) मम (प्रजाम्) (बहुलाम्) प्रवृद्धां (करोतु) एवमग्निमुक्त्वा ऋत्विज आह हे ऋत्विजः (अस्मासु) (अन्नम्) व्रीह्यादि (पयः) दुग्धं (रेतः) वीर्यं वत्तां यूयं (धत्त) स्थापयत ॥ ४८॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सोमवतां बर्हिषदामग्निष्वात्तानां मंत्रान्यजमानेन वाचयति तस्य प्रथमो मंत्रः का० १९।३।२१ ओं उदीरतामित्यस्य शङ्ख ऋषिस्त्रिष्टुप् छन्दः पितरो देवताः १ **मंत्रार्थः** (अवरे) अस्मिँल्लोके ऽव स्थिताः (उत) अपि च (परासः) परस्मिन् लोके स्थिताः (उत) अपि च (मध्यमाः) मध्यलोकस्थाः (सोम्यासः) सोमार्हाः (पितरः) (उदीरताम्) ऊर्ध्वं क्रमन्ताम् ऊर्ध्वलोकं गच्छन्तु। ईर कम्पने अदादिः लोट् (ये) (असुम्) प्राणं (ईयुः) वातरूपं प्रापाः (ते) (अवृकाः) शत्रुरहिता उदासीनाः (ऋतज्ञाः) सत्यज्ञा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा (पितरः) (हवेषु) आह्वानेषु (नः) अस्मान् (अवन्तु) रक्षन्तु।४९

द्वितीयो मंत्रः ओं अङ्गिरस इत्यस्य शंखऋषिर्विराट् त्रिष्टुप् छन्दः पितरो देवताः १

**अङ्गि॑रसो नः पि॒तरो॒ नव॑ग्वा॒ अथ॑र्वाणो॒ भृग॑वः सो॒म्यासः॑। तेषां॑ व॒य ᳪ सु॑म॒तौ य॒ज्ञिया॑ना॒मपि॑ भ॒द्रे सौ॑मन॒से स्या॑म॥५०॥ येन॑ः पूर्वे॑ पि॒तरः॑ सो॒म्यासो॑ऽनूहि॒रे सो॑मपी॒थं वसि॑ष्ठाः। तेभि॑र्य॒मः स ᳪ र॑रा॒णो ह॒वी ᳪ ष्यु॒शन्नु॒शद्भिः॑ प्रतिका॒मम॑त्तु॥**

**मंत्रार्थः** – ये (नवग्वाः) नूतनगतयः (सोम्यासः) सोमार्हाः (अङ्गिरसः) अङ्गिरसो ऽपत्यानि (अथर्वाणः) अथर्वणो मुनेरपत्यानि (भृगवः) भृगोरपत्यानि (नः) अस्माकं (पितरः) (तेषाम्) (यज्ञियानाम्) यज्ञार्हाणां (सुमतौ) शोभनबुद्धौ (भद्रे) कल्याणकारिणि (सौमनसे) शोभनमनस्त्वे (अपि) (वयम्) (स्याम) भवेम। अस्तेर्लिङ् ते ऽस्मासु सुमतिं कल्याणं मनश्च कुर्वन्त्वित्यर्थः॥५०॥ तृतीयो मंत्रः ओं येन इत्यस्य शंखऋषिर्निचृद्बृहत्युष्णिक् छन्दः पितरो देवताः १ **मंत्रार्थः** – (ये) (सोम्यासः) सोमार्हाः (वसिष्ठाः) वसिष्ठस्य गोत्रापत्यानि (नः) अस्माकं (पूर्वे)





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पितरः[७](सोमपीथं) सोमपानं [८](अनूहिरे) अनुवहन्तिस्म देवान् प्रापितवन्तः [९](उशन्) कामयमानः [१०](यमः) [११](तेभिः) तैः [१२](उशद्भिः) कामयमानैः पितृभिः। वश कान्तौ शतृ प्रत्ययः [१३](संरराणः) प्रीयमाणः सन् [१४](प्रतिकामम्) [१५](हवींषि) [१६](अत्तु) भक्षयतु ॥५१॥ तृतीयो मंत्रः ओं त्वमित्यस्य शंखऋषिर्ब्राह्म्युष्णिक् छन्दः पितरो देवताः१

**मंत्रार्थः** – हे[१](सोम) सोमाभिमानिन् देवते [२](त्वं) [३](प्रचिकितः) विशिष्टचैतन्ययुतोऽसि [४](त्वम्) [५](मनीषा) मनीषया। तृतीयैकवचने पूर्णसवर्णदीर्घः [६](रजिष्ठम्) रजसि ज्योतिर्मण्डले स्थितं निघ० [७](पन्थाम्) देवयानमार्गं [८](अनुनेषि) अनुनयसि प्रापयसि। नयतेः शपि लुसे गुणे लटि रूपम् हे[९](इन्दो) सोम [१०](नः) अस्माकं [११](धीराः) धीमन्तः यज्ञमन्तु॥५१॥

**त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनुनेषि पन्थाम्। तव प्रणीती पितरो न इन्द्रो देवेषु रत्नमभजन्त धीराः॥५२॥**

ज्ञानवन्तः [१२](पितरः) [१३](तव) [१४](प्रणीती) प्रणीत्या प्रणयेनाभ्यनुज्ञानेन [१५](देवेषु) विष्टये [१६](रत्नम्) रमणीयं यज्ञफलं [१७](अभजन्त) सिषेविरे सोमयागेनैव स्वर्गातेः॥ ५२॥ चतुर्थो मंत्रः ओं या हीत्यस्य शंखऋषिरार्षी त्रिष्टुप् छन्दः सोमो देवता१

**मंत्रार्थः** – हे[१](पवमान) शोधक [२](सोम) [३](नः) अस्माकं [४](धीराः) धीमन्तः [५](पूर्वे) [६](पितरः) [७](त्वया) [८](कर्माणि) यज्ञादीनि [९](चक्रुः) अतः प्रार्थये [१०](वन्वन्) अस्मिन्कर्मणि सम्भजमानः [११](अवातः) वाताद्युपद्रवरहितस्त्वं [१२](परिधीन्) उपद्रवकारिणः [१३](अपोर्णुहि) अपगमय। ऊर्णुञ् आच्छादने लोट् किञ्च [१४](वीरेभिः) वीरैः [१५](अश्वैः) तेजसा सूर्यरूपैः पितृभिर्युक्तस्त्वं। असौ वाऽआदित्य एषोऽश्वः श० ६।३।१।२९ [१६](नः) अस्माकं [१७](मघवा) धनवान् धनस्य दाता [१८](आभव)।५३।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पञ्चमो मंत्रः ऊँत्वमित्यस्य शंखऋषिर्निचृद्‌ब्राह्मुष्णिक् छन्दः सोमो देवता १

**मंत्रार्थः** हे (सोम) (पितृभिः) (संविदानः) सम्वादं कुर्वाणः। समोगमित्यादिनात्मनेपदित्वाच्छानच् (त्वम्) (द्यावा पृथिवी) (अन्वाततन्थ) विस्तारितवान्। तनु विस्तारे लिट् वमुथा ततन्थेत्यादिना निपातः हे (इन्द्रो) (तस्मै) (ते) तुभ्यं वयं (हविषा) (आविधेम) हविर्दद्मः। विधति र्दानार्थः (वयम्) (रयीणाम्) (धनानां) (पतयः) (स्याम) भवेम ॥५४॥ सोमवतां पितृणां षड्ऋचः समाप्तः अतो वर्हिषदां पितृणां त्र्यृचः ऊँ वर्हिषद इत्यस्य शंखऋषिर्निचृद्‌ब्राह्म्युष्णि

त्वयाहिनः पितरः सोम पूर्वेकर्म्माणिचक्रुः पवमानधीराः। वन्वन्नवातः परिधीँरऽपोर्णुवीरेभिरश्वैर्म्मघवा भवानः॥५३॥ त्वꣳ सोम पितृभिः संविदानोऽनुद्यावा पृथिवीऽआततन्थ। तस्मैतऽइन्दोहविषा विधेम वयꣳस्यामपतयो रयीणाम्॥५४॥ वर्हिषदः पितर ऊत्यर्वागिमावोहव्याचकृमाजुषध्वम्। तऽआगताऽवसा शन्तमेनाथानः शंयोररपोदधात॥५५॥

क् छन्दः पितरो देवताः१ **मंत्रार्थः** हे (वर्हिषदः) वर्हिषि दर्भे सीदन्ति ते वर्हि॰ एषोदरादित्वादन्त्यलोपः (पितरः) (ते) यूयं (ऊत्या) अवनेन निमित्तेन (अर्वाक्) समीपं (आगत) आगच्छत (वः) युष्माकं (इमा) इमानि (हव्या) हव्यानि वयं (चकृम) कृतवन्तः करोतेर्लिट् (आजुषध्वं) तानि यूयं सेवध्वं (अथ) अनन्तरं (शन्तमेन) सुखयितृतमेन (अवसा) अन्नेन तर्पिताः सन्तः (नः) अस्माकं (शं) सुखं रोगशमनं (योः) भयपृथक्करणं (अरपः) पापाभावं च



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(दधात्) धन्नस्थापयत। ततनविति नवा देशात् श्नाभ्यस्तयो रात इति आलोपाभावः॥५५॥

ओं आह मित्यस्य शंखऋषिरार्षी त्रिष्टुप् छन्दः पितरो देवताः १ **मंत्रार्थः** – (अहम्) (सुविदत्रान्) सुष्टु विशेषेण कल्याण दानान् (पितॄन्) (आ) आभिमुख्येन (अवित्सि) वेद्मि विदितवान् विदेर्लुङि आत्मने पदेउत्तमैकवचन रूपम् (विष्णोः) व्यापन शीलस्य यज्ञस्य। यज्ञो वै विष्णुः श० १।१।३।१ (नपातं) नास्ति पातो यस्मात्तं देवयान मार्गं (च) (विक्रमणं) विविधं क्रमणं गमनागमनं यस्मात्तं देवयान मार्गं (च) वेद्मि (ये) (बर्हिषदः) पितरः (स्वधया) सवनीय लक्षणेनान्नेन सह (सुतस्य) अभिषुतस्य सोमस्य (पित्वः) पानं (भजन्त) सेवन्ते लङ् अडभा-

आहम्पितॄन्त्सुविदत्राँ२॥ अवित्सिन पातञ्च विक्रमणञ्च विष्णोः। बर्हिषदो येस्वधयासुतस्यमजन्तपित्वस्तऽइहागमिष्ठाः॥५६॥ उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। तऽआगमन्तुतऽइहश्रुवन्त्वाधिब्रुवन्तुतेवन्त्वस्मान्॥५७॥

वश्वार्षः (ते) पितरः (इह) यज्ञे (आगमिष्ठाः) आगच्छन्तु। लोडर्थे लुङ् पुरुषवचनव्यत्ययः॥५६॥

ओंउपहूता इत्यस्य शंखऋषि र्भुरिगार्षी पंक्तिश्छन्दः पितरो देवताः १ **मंत्रार्थः** – हे (पितरः) (इह) यज्ञे (आगमन्तु) आगच्छन्तु। व्यत्ययेन शपो लुक् (प्रियेषु) अभिरुचितेषु (बर्हिष्येषु) बर्हिषि सादितेषु (निधिषु) निधिभूतेषु निधिवत्स्थापनीयेषु हविषु (उपहूताः) (सोम्यासः) सोम्याः (ते) पितरः (श्रुवन्तु) अस्मद्वचः श्रृण्वन्तु (ते)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(अधिब्रुवन्तु) पितृभिः पुत्राणां यदुक्तव्यं तद्वदन्तु (ते) (अस्मान्) (अवन्तु) पालयन्तु ॥५७॥

चतस्त्र ऋचोऽग्निष्वात्तानां पितृणाम् ओं आयन्त्वित्यस्य शंख ऋषिः स्वराट् ब्राह्मी गायत्री छन्दः पितरो देवताः १

**मंत्रार्थः** — (सोम्यासः) सोम्याः सोमपानार्हाः (अग्निष्वात्ताः) श्रौतस्मार्त्त कर्मानुष्ठायिनः (नः) अस्माकं (पितरः) (देवयानैः) (पाथिभिः) मार्गैः (आयन्तु) (अस्मिन्) (यज्ञे) (स्वधया) अन्नेन (मदन्तः) तृप्यन्तस्तुष्टाः सन्तोऽस्मान् (अधिब्रुवन्तु) अधिकान्वदन्तु तद्वाक्यात्तथैव वयमधिकाः स्यामेत्यर्थः (ते) पितरः (अस्मान्) (अवन्तु) पालयन्तु ॥५८॥

**आयन्तु नः पितरस्सोम्यासोऽग्निष्वात्ताः पाथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥५८॥ अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतयः । अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरन्दधातन ॥५९॥**

ओं अग्निष्वात्ता इत्यस्य शंख ऋषिर्निचृद्ब्राह्म्यनुष्टुप् छन्दः पितरो देवताः १ **मंत्रार्थः** हे (अग्निष्वात्ताः) (पितरः) (इह) यज्ञे यूयं (आगच्छत) (सुप्रणीतयः) शोभना प्रणीतिः प्रणयनं येषान्ते (सदः) (सदः) प्रति गृहं (सदत) उपविशत मित्यवीप्सयो रिति द्वित्वम् (बर्हिषि) दर्भे (प्रयतानि) नियमपूर्वकं स्थापितानि (हवींषि) (आ) (अत्त) आदरपूर्वकं भक्षयत (अथ) अनन्तरं (सर्ववीरं) पुत्रपौत्रैर्युतं (रयिं) (आ) समन्तात् (दधातन) स्थापयत ॥५९॥

ओं ये अग्निष्वात्ता इत्यस्य शंख ऋषि र्ब्राह्म्युष्णिक् छन्दः पितरो देवताः १

॥ य० ॥ माध्य० शा० ॥ वाज० सं० ॥

॥ अ० १९ ॥ मं० ५८ ॥ पृ० ६२ ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**मंत्रार्थः** [१](ये) [२](अग्निष्वात्ताः) अग्निना दग्धाः विधिवदौर्ध्वदेहिकं प्राप्ताः [३](ये) [४](अनग्निष्वात्ताः) अदग्धाः श्मशानकर्मन प्राप्ताः पितरः [५](दिवः) स्वर्गस्य [६](मध्ये) [७](स्वधया) अन्नेन स्वकर्मोपार्जितेन [८](मादयन्ते) तृप्यन्ते सुखं सेवन्ते यस्मात् [९](स्वराट्) स्वेनैव राजते स ईश्वरः [१०](तेभ्यः) पितृभ्योऽर्थे [११](यथावशम्) वशोऽभिलाषः यथाकामं [१२](एताम्) [१३](असुनीतिम्) प्राणयुक्तं [१४](तन्वम्) शरीरं [१५](कल्पयति) ददाति ॥ ६० ॥ ओं अग्निष्वात्ता इत्यस्य शंख ऋषिः आर्षी त्रिष्टुप् छन्दः पितरो देवताः १ **मंत्रार्थः** [१](ऋतुमतः) ऋतुयुक्तान् [२](अग्निष्वात्तान्) पितृन्वयं [३](हवामहे) आह्वयामः [४](ये) पितरः [५](नाराशंसे) चमसे [६](सोमपीथं) सोमपानं [७](आभुः) अश्नन्ति स्म। अश भोजने लिट् [८](ते)

**येऽअग्निष्वात्ता येऽअनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते तेभ्यः स्वराडसुनीतिमेतां यथावशन्तन्वङ्कल्पयाति ॥ ६० ॥ अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथं यऽआशुः। तेनो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम्। ६१।**

[९](विप्रासः) पितरः [१०](नः) अस्माकं [११](सुहवाः) स्वाह्वानाः [१२](भवन्तु) अस्मदाहूताः शीघ्रमायान्तु [१३](वयम्) [१४](रयीणाम्) धनानां [१५](पतयः) [१६](स्याम) भवेम ॥ ६१ ॥ ओं आच्या जान्वित्यस्य शंख ऋषिर्निचृत्त्रिष्टुप् छन्दः पितरो देवताः १

**मंत्रार्थः** – हे [१](पितरः) [२](विश्वे) सर्वे यूयं वाम [३](जानु) [४](आ) समन्तात् [५](आच्य) पातयित्वा [६](दक्षिणतः) [७](निषद्य) दक्षिणाभिमुखा उपविश्य [८](इमम्) [९](यज्ञम्) [१०](अभिगृणीत) अभिष्टुत स्वाध्वयं यज्ञ इति स्तुतिं कुरुत [११](केनचित्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

केनाप्यपराधेन (नः) अस्मान् (मा) (हिंसिष्ट) हिंसां मा कुरुत। हिनस्तेर्लुङ् (यत्) यस्मात् (पुरुषता) पुरुषभावेन चलचित्त्वेन। विभक्तिलोपः (वः) युष्माकं (आगः) अपराधं (वयम्) (कराम) कुर्मः। करोतेः शपि लङि रूपम् अड भावः ॥ ६२ ॥ ओं आसीनास इत्यस्य शंखऋषि र्ब्राह्म्युष्णिक् छन्दः पितरो देवता १

**मंत्रार्थः** – हे (पितरः) (अरुणीनाम्) अरुणवर्णानामूर्णानां यद्वा अरुणवर्णानामादित्यरश्मीनां (उपस्थे) उपरिभागे उत्सङ्गे वा (आसीनासः) आसीनाः उपविष्टाः यूयं (दाशुषे) हविर्दत्तवते (मर्त्याय) मनुष्याय यजमानाय (रयिम्)

**आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे। मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६२ ॥ आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय। पुत्रेभ्यः पितरस्तस्य वस्वः प्रयच्छत त इहोर्जं दधात ॥ ६३ ॥ यमग्ने कव्यवाहन त्वं चिन्मन्यसे रयिम्। तन्नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ ६४ ॥**

धनं (धत्त) दत्त (पुत्रेभ्यः) (तस्य) (वसुनः) धनस्य (प्रयच्छत) दानं कुरुत (ते) यूयं (इह) यज्ञे (ऊर्जं) रसं (दधात) स्थापयत ॥ ६३ ॥ ओं यमग्न इत्यस्य शंखऋषिरार्षी पंक्तिश्छन्दोऽग्निर्देवता १ **मंत्रार्थः** – हे (कव्यवाहन) कव्यं पितृभ्यो देयमन्नं वहतीति क०। कव्यपुरीषपुरीष्येषु ञ्युडिति ञ्युट् प्रत्ययः (अग्ने) (त्वम्) (चित्) अपि (यम्) (रयिम्) हविर्लक्षणं धनं (मन्यसे) उत्तमं जानासि (नः) अस्माकं (तम्) (गीर्भिः) वाग्भिः पुरोऽनुवाक्यायाज्यावषट्



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कारलक्षणाभिः (अवाच्यं) श्रोतुं योग्यं। ऋदक्षिस्ए हि गृहि दयिभ्य आय्य इति श्रृणोते राय्य प्रत्ययः (युजं) योग्यं हविर्लक्षणं धनं युज्यत इति युक्तम् क्विप् चेति क्विप्रत्ययः (देवत्रा) देवेषु देवमनुष्य पुरुषेत्यादिना सप्तम्यर्थे देवात्त्रा प्रत्ययः (आपनय) समन्ताद्देहिपनति दूर्न कर्म॥ ६४॥ ओं यो अग्नि रित्यस्य शंखऋषि रार्ष्यनुष्टुप् छन्दः अग्निर्देवता।

**मंत्रार्थः**–(यः) (कव्य वाहनः) (अग्निः) (ऋतावृधः) ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋत वृधः सूंहिता यां दीर्घः तान् (पितृन्) (यक्षत्) इष्टवान्। लेटोः डाटौ सिब्बहुलं लेटि इतोलोपः (उ) (इत्) सोऽग्निरेव (देवेभ्यः) (च) (पितृभ्यः)

**योऽअग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः। प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ। ६५। त्वामग्न ईडितः कव्यवाहनावाड्ढव्यानि सुरभीणि कृत्वी। प्रादाः पितृभ्यः स्वधया तेऽअक्षन्नद्धि त्वन्देव प्रयता हवींषि ६६**

(हव्यानि) हवींषि (आ) समन्तात् (प्रवोचति) व्यत्ययेन वचेः शपि वच उमिति छान्दस उमागमः॥ ६५॥

ओं त्वमित्यस्य शंखऋषिर्निचृत् त्रिष्टुप् छन्दोऽग्निर्देवता।

**मंत्रार्थः**–हे (कव्य वाहन) (अग्ने) (ईडितः) देवैर्ऋत्विग्भिश्च स्तुतः (त्वम्) (हव्यानि) हवींषि (सुरभीणि) सुगन्धानि (कृत्वी) कृत्वा। स्नात्वादयश्चेति कृत्वीतिनिपातः (अवाट्) वहसिस्म। वहेर्लुङि इडागमाभावे सिचो लोपे रूपम वाट् (स्वधया) पितृमंत्रेण (पितृभ्यः) (प्रादाः) दत्तवानसि। ददातेर्लुङि रूपम् (ते) पितरः (अक्षन्) भक्षयन्तिस्म। घस्तृ अदने इत्य रूपम् हे (देव) अग्ने (त्वम्) अपि (प्रयता) प्रयतानि शुद्धानि (हवींषि) (अद्धि) भक्षय। अद भक्षणे॥ ६६॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ॐ येचे हेत्यस्य शंखऋषिर्ब्राह्म्युष्णिक् छन्दोऽग्निर्देवता १ **मंत्रार्थः** (च)[1] (ये)[2] (पितरः)[3] (इह)[4] लोके देहं गृहीत्वावर्त्तन्ते (च)[5] (ये)[6] (इह)[7] अस्मिल्लोके (न)[8] सन्ति स्वर्गे वर्तन्ते (च)[9] (यान्)[10] पितॄन् (विद्म)[11] वयं जानीमः (च)[12] (यान्)[13] पितॄन् (न)[14] (प्रविद्म)[15] स्मरणाभावात् हे (जातवेदः)[16] सर्वज्ञाग्ने (ते)[17] पितरः (यति)[18] यावन्तस्तान् (उ)[19] एव (त्वम्)[20] (वेत्थ)[21] जानासि (स्वधाभिः)[22] पितॄणामन्नैः (सुकृतं)[23] शोभनं यज्ञं (जुषस्व)[24] सेवस्व ॥ ६७ ॥ ॐ इदमित्यस्य शंखऋषि ब्राह्म्युष्णिक् छन्दः पितरो देवताः १ **मंत्रार्थः** – (अद्य)[1] (इदम्)[2] (नमः)[3] अन्नं (पितृभ्यः)[4] (अस्तु)[5] (ये)[6] (पूर्वासः)[7] पूर्वे । ऋषयः

**येचे॒ह पि॒तरो॒ येच॒नेह यॉंश्च॑ वि॒द्मयाँ २॥ उ॑च॒न प्र॑वि॒द्म । त्वं वे॑त्थ॒ यति॒ ते जा॑त वे॑दः स्व॒धा भि॑र्य्य॒ज्ञ ꣳ सु॑कृ॒तञ्जु॑षस्व ॥ ६७ ॥ इ॒दम्पि॒तृ भ्यो॒ नमो॑ऽअस्त्व॒द्य ये पूर्वा॑सो॒ यऽउप॑रास ई॒युः । ये पार्थि॑वे॒ रज॒स्या नि षे॑त्ता॒ ये वा॑नू॒न ꣳ सु॑वृ॒जना॑सु वि॒क्षु ॥ ६८ ॥**

(ये)[8] (उपरासः)[9] उपराः उपरमन्ते विरमन्ति ते उपरा उपरतव्यापाराः कृतकृत्याः (ईयुः)[10] सगुणं ब्रह्म प्रापुः (ये)[11] (पार्थिवे)[12] (रजसि)[13] स्वर्गादिलोकेषु । रजांसि वै लोका उच्यन्त इति श्रुतेः (आनिषत्ता)[14] समन्तान्निषण्णाः । नसत्त निषत्तेत्यादिना निष्ठायां निपातः (वा)[15] अथवा (ये)[16] (नूनꣳ)[17] (सुवृजनासु)[18] धर्मरूपबलयुक्तासु (विक्षु)[19] प्रजासु मनुष्यलोके देहं गृहीत्वा वर्त्तन्ते ॥ ६८ ॥ ॐ अधेत्यस्य शंखऋषि रार्षी त्रिष्टुप् छन्दोऽग्निर्देवता १

**मंत्रार्थः** हे (अग्ने)[1] (नः)[2] अस्माकं (परासः)[3] परा उत्कृष्टाः (प्रत्नासः)[4] प्रत्नाः पुराणाः (ऋतं)[5] यज्ञं (आशुषाणाः)[6] आ



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अनु वाना प्राप्नुवन्तः (पितरः) (यथा) येन प्रकारेण (अधा) अधो लोकात् (शुचि) शुचिं निर्मलं। सुपोलोपः (दीधितिं) रविमंडलं (इत्) एव (अयन्) आप्ताः। अय गतौ लङ् अड्भाव आर्षः (उक्थ शासः) यज्ञेषु उक्थानि शस्त्राणि शंसन्ति वदन्ति ते उक्थशासः क्विप् संहितायां दीर्घः (क्षामा) क्षामां भूमिं (भिन्दन्तः) वेदित्वात्वा लादि खननै र्विदारयन्तः सर्वोप करणै र्यज्ञं कुर्वन्तो वयं (अरुणीः) अरुण वर्णाः सूर्य दीधितं (अपव्रन्) अप वृणुमः सूर्य रश्मीनप वृत्य देवयान मार्गं प्राप्नुम। वृञ् वरणे विकरण व्यत्ययेन शपि लुप्ते लङि रूपम् अड भावः पुरुष व्यत्ययश्छान्दसः॥६९॥

ओं उशन्त इत्यस्य शंखऋषिरनुष्टुप् छन्दोऽग्निर्देवता १ **मंत्रार्थः** – हे अग्ने (उशन्तः) कामयमाना वयम्

**अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः। शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन्॥६९॥**

**उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे॥७०॥**

(त्वा) त्वां (निधीमहि) स्थापयामः (उशन्तः) कामयमाना एव वयं त्वां (समिधीमहि) सन्दीपयामः (उशन्) कामयमानस्त्वं (उशतः) कामयमानान् (पितॄन्) (हविषे) (अत्तवे) हविः अत्तुं भक्षयितुं। तुमर्थे तवे प्रत्ययः विभक्ति व्यत्ययः (आवह) आनय॥७०॥ ओं अपामित्यस्य शंखऋषिर्गायत्री छन्द इन्द्रो देवता १

**मंत्रार्थः** हे (इन्द्र) (यत्) यदा त्वं (विश्वाः) (स्पृधः) सर्वान् सङ्ग्रामान् (अजयः) जितवानसि तदा (अपाम्) (फेनेन)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जलडिन्डीरेण (नमुचेः) असुरस्य (शिरः) (उदवर्त्तयः) छिन्नवानसि उत्पूर्वो वृतिः छेदार्थः ॥ ७१॥

**अथाध्यात्मम्** – हे (इन्द्र) आत्मरूप यजमान (यत्) यस्मात्त्वं (विश्वाः) सर्वान् (स्पृधः) कामादीनां सङ्ग्रामान् (अजयः) तस्मात् (अपाम्) कमलान्तरिक्षाणां (फेनेन) कामजनितेन मलेन (नमुचेः) पापस्य। पाप्मावै नमुचिः श० १२।७।३।४ (शिरः) (उदवर्तयः) ॥ ७१॥ अथर्चैनानुवाकेन समानकालमेव पयोग्रहान् सुराग्रहांश्चाध्वर्युरुपतिष्ठते तस्य प्रथमो मंत्रः का० १९।२।२४ ओं सोम इत्यस्याश्वि सरस्वतीन्द्रा ऋषयो महा बृहती छन्दः सोमो देवता १ **मंत्रार्थः** – यस्मात् (सुतः) अभिषुतः (राजा) (सोमः) (अमृतम्) अमृतरूपो रसरूपो भूत्वा-

**अपाम्फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः। विश्वा यदजयः स्पृधः ॥ ७१॥**

**सोमो राजामृतं सुत ऋजीषेणाजहान्मृत्युम्। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७२॥**

(ऋजीषेण) नीरसेन सोमलताचूर्णेन (मृत्युम्) स्थूलभावं (अजहात्) तस्मात् (ऋतेन) यज्ञेन (इन्द्रस्य) (इदम्) (अन्धसः) अन्नस्य सोमस्य (शुक्रम्) शुद्धं (इन्द्रियम्) वीर्यप्रदं (विपानम्) तथा (इन्द्रियम्) वीर्यप्रदं (अमृतं) अमृततुल्यं (मधु) मधुरं (पयः) (सत्यम्) भवति ॥ ७२॥

**अथाध्यात्मम्** – (यस्मात् (सुतः) देहाभिमानात्पृथक्कृतः (राजा) राजमानः (सोमः) आत्मप्रतिबिंबः (अमृतम्) भूत्वा (ऋजीषेण) देहेन (मृत्युम्) (अजहात्) तस्मात् (ऋतेन) योगयज्ञेन (इन्द्रस्य) आत्मनः (इदम्)





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ (अन्धसः) आत्म प्रति विंवस्य (भुक्रम्) भुद्धं (इन्द्रियं) योग वल प्रदं (विपानम्) तथा (इन्द्रियम्) योग वल प्रदं (अमृतम्) अमृत तुल्यं (मधु) मधुरं (पयः) प्राणः। प्राणः पयः श० ६।५।४।१५ (सत्यम्) भवति॥ ७२॥

द्वितीयो मंत्रः ओं अद्भ्य इत्यस्याश्विसरस्वतीन्द्रा ऋषयो महा वृहती छन्दो ग्रहा देवताः १ **मंत्रार्थः**– यस्मात् (कुङ्) हंस रूपः (आङ्गिरसः) प्राणः। प्राणोवा ऽ अङ्गिरा श० ६।१।२।२८ (धिया) प्रज्ञया (अद्भ्यः) कमलान्तरिक्षेभ्यः (क्षीरम्) आत्म प्रति विंवं (अपवित्) तस्मात्० पूर्ववत्॥ ७३॥ तृतीयो मंत्रः ओं सोममित्यस्य विनियोगः पूर्ववत्-

**अद्भ्यः क्षीरं व्यपिवत्क्रुङ्ङाङ्गिरसो धिया। ऋतेन सत्यमिन्द्रियं विपानᳪं भुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥ ७३॥ सोममद्भ्यो व्यपिवच्छन्दसा हᳪंसः भुचिषत्। ऋतेन सत्यमिन्द्रियं विपानᳪं भुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥ ७४॥**

**मंत्रार्थः** (भुचिषत्) ब्रह्माग्नौ सीदतिसः (हंसः) आत्मा (अद्भ्यः) कमलान्तरिक्षेभ्यः (छन्दसा) महा वाचा (सोमम्) आत्मप्रति विंवं (व्यपिवत्) तस्मात्०–पूर्ववत्॥ ७४॥ चतुर्थो मंत्रः ओं अन्नादित्यस्याश्विसरस्वतीन्द्रा ऋषयोऽतिजगती छन्दः ग्रहा देवताः १ **मंत्रार्थः** (प्रजापतिः) आत्मा (परिस्रुतः) देह रूपात्। शरीरं सुराग्रहाः श० १२।७।३।१६ (अन्नात्) (रसम्) रस रूपं (सोमम्) आत्म प्रति विंवं (क्षत्रम्) प्राणं। प्राणो वै क्षत्रं श० १४।८।१४।४ (पयः) शीर्षन्प्राणं। प्राणः पयः शीर्षस्तत्प्राणं (ब्रह्मणा) महा वाचा (व्यपिवत्) विविच्य पीतवान्। तस्मात्० पूर्ववत्॥ ७५॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पंचमो मंत्रः ओं रेत इत्यस्याश्विसरस्वतीन्द्रा ऋषयोऽतिशक्करी छन्दो ग्रहाः देवताः १

**मंत्रार्थः** (इन्द्रियं) इन्द्रियसमूहः (योनिम्) ब्रह्म (प्रविशत्) सत् (रेतः) आत्मप्रतिबिंबं। रेतो वै सोमः श० २।५।१।९ (मूत्रम्) लिंगशरीरं (विजहाति) तथा (जरायुणा) पराशक्त्या (आवृतः) (गर्भः) आत्मप्रतिबिंबः (जन्मना) मोक्षसम्बन्धिसंस्कारेण (उल्वम्) देहरूपं जरायु (जहाति) तस्मात्० पूर्ववत् ॥७६॥

**अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७५॥ रेतो मूत्रं विजहाति योनिम्प्रविशदिन्द्रियम्। गर्भो जरायुणावृत उल्वञ्जहाति जन्मना। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥७६॥ दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्प**

षष्ठो मंत्रः ओं दृष्ट्वेत्यस्याश्विसरस्वतीन्द्रा ऋषयोऽतिशक्करी छन्दो ग्रहा देवताः १ **मंत्रार्थः** – (प्रजापतिः) ब्रह्म। ब्रह्म वै प्रजापतिः १३।६।२।८ (सत्यानृते) (रूपे) परापरे प्रकृती (दृष्ट्वा) (व्याकरोत्) व्याकरणं पृथक्त्वं कृतवान्। (प्रजापतिः) ब्रह्म (अनृते) अपरायां (अश्रद्धां) (अदधात्) स्थापयत् (सत्ये) परायां (श्रद्धाम्) (अदधात्) तस्मात्० पूर्ववत् ॥७७॥ सप्तमो मंत्रः ओं वेदेनेत्यस्याश्विसरस्वतीन्द्रा ऋषयो महाबृहती छन्दो ग्रहा देवताः १



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**मंत्रार्थः** [1](प्रजा पतिः) आत्मा [2](सुता सुतौ) परापरे [3](रूपे) [4](वेदेन) ज्ञानेन [5](व्यपिवत्) तस्मात्० पूर्ववत् ॥ ७८॥

अष्टमो मंत्रः ओं दृष्ट्वेत्यस्याश्वि सरस्वतीन्द्रा ऋषयोऽति जगती छन्दो ग्रहा देवताः १ **मंत्रार्थः** – [1](प्रजा पतिः) ब्रह्म-[2](परिस्रुतः) देहस्य। शरीरं सुरा ग्रहाः श० १२।७।३।१६ [3](रसम्) भूतात्मानं [4](दृष्ट्वा) [5](शुक्रेण) सूर्य रूपेण। एषवै शुक्रोय एषत पति तस्य येरश्म यस्ते विश्वे देवाः श० ४।३।१।२६ [6](पयः) प्राणं [7](सोमं) अमृतं [8](शुक्रो) मानस सूर्य [9](व्यपिवत्) वियु

**योमृतम्मधुः ॥ ७७॥**

**वेदेन रूपे व्यपिवत्सुता सुतौ प्रजा पतिः। ऋतेन सत्य मिन्द्रियं विपानं शुक्र मन्धस इन्द्रस्येन्द्रिय मिदम्पयोमृतम्मधु ॥ ७८॥ दृष्ट्वा परि स्रुतो रस शुक्रेण शुक्रंव्यपिवत्पयः सोमम्प्रजा पतिः। ऋतेन सत्य मिन्द्रियंविपानं शुक्रम न्धस इन्द्रस्योन्द्रियमिदम्पयोमृतम्मधु ॥ ७९॥**

ज्यपीतवान् तस्मात्० पूर्ववत् — ॥ ७९॥ आर्षभैः खुरैः पशूनां वसां गृहीत्वा द्वात्रिंशत्संख्यान् सुरा ग्रहान् जुहोतित-स्यप्रथमो मंत्रः का० १९। ४। १२ ओं सीसेनेत्यस्य प्रजापतिर्ऋषिर्जगती छन्दोऽश्वि सरस्वतीन्द्रा देवताः १

**मंत्रार्थः** – [1](आश्विना) अश्विनौ [2](सविता) [3](सरस्वती) [4](वरुणः) [5](मनीषिणः) मेधा विनः [6](कवयः) सर्वज्ञाः सर्वे [7](इन्द्रस्य) [8](रूपम्) [9](भिषज्यन्) भिषज्यन्तः। भिषज् रुग्जये कराड्वादित्वाद्यक् ततः शतृ प्रत्ययः वचन व्यत्ययः [10](यज्ञम्) सौत्रामणीं [11](वयन्ति) निष्पादयन्ति यथा [12](सीसेन) धातुविशेषेण [13](ऊर्णा सूत्रेण) [14](मनसा) च [15](तन्त्रम्) अङ्गद विशे

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

षं पटं वा वयन्ति॥ ८०॥ अथाध्यात्मम् – (अश्विना) नरनारायणौ (सविता) सूर्यः (सरस्वती) वाग धिष्ठात्री देवता (वरुणः) महानारायणः (मनीषिणः) मेधाविनः (कवयः) सर्वज्ञाः सर्वे (इन्द्रस्य) यजमानस्य। इन्द्रो वै यजमानः श० १। १। २। ११ (रूपम्) (भिषज्यन्) संसार रोग रहितं कुर्वन्तः (यज्ञम्) (वयन्ति) निष्पादयन्ति यथा (सीसेन) धातु विशेषेण (ऊर्णा सूत्रेण) (मनसा) च (तन्त्रम्) अङ्ग द विशेषं पटं वा वयन्ति॥ ८०॥

द्वितीयो मंत्रः- ॐ तदस्येत्यस्य प्रजा पति र्ऋषि र्जगती छन्दोऽश्विसरस्वतीन्द्रा देवताः १

सीसे॑न॒ तन्त्रं॒ मन॑सा मनी॒षिण॑ ऊर्णासू॒त्रेण॑ क॒वयो॑ वयन्ति। अ॒श्विना॑ य॒ज्ञꣳ स॑वि॒ता सर॑स्व॒तीन्द्र॑स्य रू॒पं वरु॑णो भि॒षज्य॑न्॥ ८०॥ तद॑स्य रू॒पम॒मृत॒ꣳ शची॑भिस्ति॒स्रो द॑धुर्दे॒वताः॑ सꣳर॒राणाः॑। लोमा॑नि॒ शष्पै॑र्ब॒हुधा॒ न तोक्म॑भि॒स्त्वग॑स्य मा॒ꣳसम॑भव॒न्न ला॒जाः॥ ८१॥

**मंत्रार्थः** (तिस्रः) (देवताः) अश्वि सरस्वत्यः (संरराणाः) सम्यक् रममाणाः सत्यः (अस्य) इंद्रस्य (तत्) (अमृतं) अमरणधर्मि (रूपम्) (शचीभिः) कर्मभिः (सन्दधुः) कर्माङ्गैः सन्धानं चक्रुः तदेवाह (अस्य) इन्द्रस्य (लोमानि) (शष्पैः) विरूढ व्रीहिभिः (न) च (त्वक्) (तोक्मभिः) विरूढ यवैः (बहुधा) आधिदैवाध्यात्म भेदाभ्यां सन्दधुः (न) च (मांसं) (लाजाः) (सम्भवन्) ॥ ८१॥ अथाध्यात्मम् (तिस्रः) (देवताः) वाग धिष्ठात्री नरनारायणाः (संरराणाः) सम्यक् रममाणाः सन्तः (अस्य) यजमानस्य (तत्) (अमृतम्) (रूपम्) (शचीभिः) महावाग्भिः निघं०



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

[९](सन्दधुः) तदेवाह [१०](अस्य) यजमानस्य [११](लोमानि) रोमाणि [१२](शष्पैः) शष्परूपैः [१३](न) च [१४](त्वक्) [१५](तोक्मभिः) तोक्मरूपैः [१६](वऊधा) सन्दधुः [१७](न) च [१८](मांसं) [१९](लाजाः) [२०](समभवन्) ॥ ८१॥ तृतीयोमंत्रः ओंतदश्विनेत्यस्य विनियोगः पूर्ववत्-

**मंत्रार्थः** [१](गवाम्) [२](त्वचि) चर्मणि [३](दधतः) सुरांस्थापयन्तः [४](रुद्रवर्त्तनी) रुद्रवत् वर्तनिर्मार्गो ययोस्तौ- [५](भिषजा) भिषजौ वैद्यौ [६](अश्विना) अश्विनौ [७](सरस्वती) [८](अन्तरम्) [९](पेशः) इन्द्रस्य शरीरान्तर्वर्तिरूपं [१०](वयति) वयन्ति सम्बध्नन्ति वचनव्यत्ययः तदेवाह [११](अस्थि) [१२](मासरैः) शष्पादिचूर्णचरुभिः स्रावैः [१३](न) च [१४](मज्जानम्) [१५](कारोतरेण) गलन

**तदश्विना भिषजा रुद्रवर्त्तनी सरस्वती वयति पेशो अन्तरम्। अस्थि मज्जानं मासरैः कारोतरेण दधतो गवान्त्वचि॥ ८२॥ सरस्वती मनसा पेशलं वसु नासत्याभ्याम् वयति दर्शतं वपुः। रसम्परिस्रुता न रोहितन्नग्नहुर्द्धीरस्तसरन्न वेम॥ ८३॥**

वासस्रावयन्ति ॥ ८२॥ **अथाध्यात्मम्** [१](गवाम्) इन्द्रियाणां [२](त्वचि) गोलके [३](दधतः) अविद्यां स्थापयन्तः [४](रुद्रवर्त्तनी) प्राणमार्गे वर्त्तमानौ श० १४।६।९।५ [५](भिषजा) संसाररोगनाशकौ [६](अश्विना) नरनारायणौ [७](सरस्वती) महावागपि [८](अन्तरम्) [९](पेशः) यजमानस्य यत्ररूपं [१०](वयति) वयंति तदेवाह [११](अस्थि) [१२](मासरैः) मासररूपैः [१३](न) च [१४](मज्जानम्) [१५](कारोतरेण) कारोतररूपेण वयन्ति ॥ ८२॥ ओंसरस्वतीत्यस्य विनियोगः पूर्ववत्-

**मंत्रार्थः** [१](नासत्याभ्याम्) अश्विभ्यां सहिता [२](सरस्वती) [३](मनसा) विचार्य इन्द्रस्य [४](पेशलम्) पेश इति हिरण्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रूपयोर्नाम पेश लाति गृह्णाति पेशलं हिरण्य वद्रूपवत् (वसु) धनं तथा (दर्शतं) दर्शनीयं (वपुः) रूपं (वयति) पटमिव स्रजति (न) च (रसम्) (परिस्रुता) सन्दधुः (रोहितम्) लोहितं (धीरः) मादकः (नग्नहुः) किएवः (सुरा कन्दः) (न) च (तसरं) सूत्रं (वेम) वापदण्डोऽभवत् ॥ ८३ ॥ **अथाध्यात्मम्**–(नासत्याभ्याम्) नास्त्य सत्यं ययोस्ताभ्यां नरनारायणाभ्यां सहिता (सरस्वती) वाग धिष्ठात्री देवी (मनसा) विचार्य यजमानस्य (पेशलम्) विष्णुसम्बन्धिनं (वसुः) योगैश्वर्यं तथा (दर्शतं) सूर्यतुल्यं (वपुः) रूपं (वयति) पटमिवस्रजति (न) च (रसम्) देहे वर्त्तमान मन्न रसं-

**पयसा शुक्रममृतञ्जनित्र थं सुरया मूत्राज्जनयन्त रेतः। अपामतिन्दुर्म्मतिम्बाधमाना ऊवध्यं वात थं सब्वन्त दारात् ॥ ८४ ॥ इन्द्रः सुत्रामा हृदयेन सत्यम्पुरोडाशेन सविता जजान ॥ यकृत्क्लोमानं वरुणो भिषज्यन्म तस्ने वायव्यैर्नमिनाति पित्तम् ॥ ८५ ॥**

(परिस्रुता) परिस्रुद्रूपेण सन्दधुः (रोहितम्) लोहितं (धीरः) मादकः (नग्नहुः) (न) च (तसरं) (वेम) अभवत् । ८३ ॥

ओंपयसेत्यस्य विनियोगः पूर्ववत्- **मंत्रार्थः** त्रयो देवाः (पयसा) दुग्धेन इन्द्रस्य (शुक्रम्) शुक्लं (अमृतम्) अमृत रूपं (जनित्रं) जनन शीलं (रेतः) वीर्यं (जनयन्त) उदपादयन् अड भाव आर्षः तथा (आरात्) समीपे (अमतिम्) अज्ञानं (दुर्मतिं) दुर्बुद्धिं (बाधमानाः) निवर्त्तयन्त स्त्रयो देवाः (तत्) (ऊवध्यं) आमाशय गतान्न सम्बन्धि (वातम्) (सुरया) तथा (सब्वम्) पक्वाशय गतं वातं (अप मूत्रात्) ऋजीषात् गतसार सोमाद् जनयन्त ॥ ८४ ॥



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**अथाध्यात्मम्** – त्रयोदेवाः (पयसा) प्राणेन पयः प्राणः १२।८।१।२० यजमानस्य (शुक्रम्) शुद्धं (अमृतम्) (जनित्रं) मोक्षजनकं (रेतः) योग बलं (जनयन्त) तथा (आरात्) समीपे (अमतिम्) अज्ञानं (दुर्मतिं) दुर्बुद्धिं (बाधमानाः) निवर्तयन्त स्त्रयो देवाः (तेन) (ऊवध्यं) (वातम्) (सुरया) सुरा रूपेण तथा (सप्पम्) (अपमूत्रात्) अपमूत्र रूपाद् कल्पयन् ॥ ८४॥ ओं इन्द्र इत्यस्य विनि योगः पूर्ववत्॰

**मंत्रार्थः** (सुत्रामा) श्रेष्ठ रक्षकः (इन्द्रः) महा नारायणः (हृदयेन) तथा (सविता) विराट् पुरुषः (पुरोडाशेन) मानस सूर्येण अन्नं वाः एत द्ब्राह्मणस्य यत्सोमः श॰१२।७।२।२ सोमो वैभ्राट् ३।२।४।९ इन्द्रस्य (सत्यम्)

आन्त्राणि स्थालीर्म्मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः। श्येनस्य पत्रन्न प्लीहा शचीभिरा सन्दी नाभि रुदरन्न माता ॥ ८६॥

(जजान) (भिषज्यन्) इन्द्रस्य चिकित्सां कुर्वन् (वरुणः) (यकृत्) काल खण्डं (क्लोमानं) गलनाडिकां (मतस्ने) हृदयोभय पार्श्वस्थे अस्थिनी (न) च (पित्तं) (वायव्यैः) सौमि कौर्ध्व पात्रैः (मिनाति) निर्मिमीते स्रजति ॥ ८५॥ **अथाध्यात्मम्** (सुत्रामा) सुष्ठु रक्षकः (इन्द्रः) महा नारायणः (हृदयेन) तथा (सविता) सूर्यः (पुरोडाशेन) आत्मप्रति बिंबेन (सत्यम्) (जजान) (भिषज्यन्) यजमानस्य चिकित्सां कुर्वन् (वरुणः) ईश्वरः (यकृत्) (क्लोमानं) (मतस्ने) (न) च (पित्तं) (वायव्यैः) सौमि कौर्ध्व पात्र रूपैः (मिनाति) कल्पयति ८५

ओं आन्त्राणीत्यस्य विनियोगः पूर्ववत्॰ **मंत्रार्थः** – (मधु) (पिन्वमानाः) मधुसिञ्चन्त्यः (स्थालीः) स्थाल्यः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

([4]आन्त्राणि) अभवन् ([5]सुदुघा) सुदोग्ध्री ([6]धेनुः) ([7]न) इव ([8]पात्राणि) ([9]गुदाः) माणाः। प्राणो वै गुदः श० ३।८।४।३
अभवन् ([10]न) च ([11]श्येनस्य) ([12]पत्रम्) ([13]प्लीहा) हृदय वाम भागस्थः सिथिल मांसपिण्डोऽभवत् ([14]न) च ([15]माता) अभिषेक स्थानभूता जननी स्थानीया ([16]आसन्दी) ([17]शचीभिः) कर्मभिः ([18]नाभिः) ([19]उदरं) चाभवत्॥ ८६॥

**अथाध्यात्मम्**–([1]मधु) ([2]पिन्वमानैः) ([3]स्थालीः) स्थाल्य ([4]आन्त्राणि) आन्त्ररूपाण्यभवन् ([5]सुदुघा) ([6]धेनुः) ([7]न) इव ([8]पात्राणि) ([9]गुदाः) प्राणा एवाभवन् ([10]न) च ([11]श्येनस्य) ([12]पत्रम्) ([13]प्लीहा) प्लीहैवाभवत् ([14]न) च ([15]माता) ([16]आसन्दी) ([17]शचीभिः) कर्म कारणैः ([18]नाभिः) नाभिरेव ([19]उदरं) उदरमेवचाभवत्॥ ८६॥

**कुम्भो॑ वनि॒ष्टुर्ज॑नि॒ता शची॑भि॒र्यस्मि॑न्न॒ग्रे योन्यां॒ गर्भो॑ऽअ॒न्तः। प्ला॒शिर्व्य॑क्तः श॒तधा॑र॒ऽउत्सो॑ दु॒हे न कु॒म्भी स्व॒धां पि॒तृभ्यः॑॥ ८७॥**

ॐ कुम्भ इत्यस्य विनियोगः पूर्ववत्। **मंत्रार्थः** ([1]जनिता) ([2]कुम्भः) सुराधान कुम्भः ([3]शचीभिः) कर्मभिः ([4]वनिष्टुः) स्थूलान्त्र मासीत् ([5]यस्मिन्) ([6]योन्याम्) कुम्भरूपे ([7]अन्तः) मध्ये ([8]अग्रे) प्रथमम् ([9]गर्भः) सुरारूपउषितः ([10]शतधारः) ([11]उत्सः) कूपतुल्यः कुम्भः ([12]व्यक्तः) स्पष्टः ([13]प्लाशिः) शिश्नोऽभवत् ([14]न) च ([15]कुम्भी) सुराधानी ([16]पितृभ्यः) ([17]सुधां) अन्नं ([18]दुहे) दुग्धे पूरयति लोपस्त आत्मनेपदेष्विति तलोपः॥ ८७॥

**अथाध्यात्मम्**– ([1]जनितः) जनकः ([2]कुम्भः) ([3]शचीभिः) योगयत्न कारणैः ([4]वनिष्टुः) स्थूलान्त्ररूपोऽभवत् ([5]यस्मिन्) ([6]योन्याम्) कुम्भरूपे ([7]अन्तः) मध्ये ([8]अग्रे) प्रथमं ([9]गर्भः) सुरा रूपउषितः स ([10]शतधारः) ([11]उत्सः) कूपतु



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ल्यः कुम्भः (व्यक्तः) स्पष्टः (श्राशिः) शिश्नरूपोऽभवत् (न) च (कुम्भी) सुराधानी देहः। शरीरं सुराग्रहाः श० १२।७।३।१६ पितृभ्यः) (सुधां) (दुहे) ॥ ८७॥ ओं मुखमित्यस्य विनियोगः पूर्ववत् १

**मंत्रार्थः** –(सत्) सतः पात्रविशेषः अन्त्यलोपश्छान्दसः (अस्य) इन्द्रस्य (मुखम्) अभूत् (सतेन) (इत्) पात्रेणैव-(शिरः) अभूत् (पवित्रं) (जिह्वा) अभूत् (अश्विना) अश्विनौ (सरस्वती) च (आसन्) आस्येऽभूवन् (न) च (चप्यम्) (पायुः) इन्द्रियमभूत् (वालः) सुरागलनवस्त्रं (अस्य) इन्द्रस्य (भिषग्) वैद्यः (वस्तिः) गुदं (न) च (हरसा) वीर्येण (तरस्वी) वेगवान् (शेपः) लिङ्गं चाभूत् वालेन त्रयं जातम् ॥ ८८॥

**मुखꣳ सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती। चप्यन्न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥ ८८॥**

**अथाध्यात्मम्** –(सत्) सतः पात्रविशेषः (अस्य) यजमानस्य (मुखम्) मुखमेवाऽभवत् (सतेन) (इत्) सतरूपेणैव (शिरः) कल्पितोऽभूत् (पवित्रं) (जिह्वा) जिह्वैवाभवत् (अश्विना) नरनारायणौ (सरस्वती) महावागभिमानिनी देवी (आसन्) जप्यरूपेण मुखेऽभवन् (न) च (चप्यम्) (पायु) पायुरेवाभूत् (वालः) सुरागलनवस्त्रं (अस्य) यजमानस्य (भिषग्) वैद्यरूपः (वस्तिः) गुदं (न) तथा (हरसा) बलेन (तरस्वी) वेगवान (शेपः) लिंगमेवाभूताम्। अङ्गेष्वेव सर्वेषां कल्पना ॥ ८८॥ ओं अश्विभ्यामित्यस्य विनियोगः पूर्ववत् १

**मंत्रार्थः** (अश्विभ्याम्) अश्विदेवत्याभ्यां (ग्रहाभ्याम्) इन्द्रस्य (अमृतम्) अनश्वरं (चक्षुः) अभूत (ग्रहेण)

॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पक्वेन (छागेन) छागरूपेण (हविषा) (तेजः) चक्षुः सम्बन्धि तेजोऽभवत् (गोधूमैः) (पक्ष्माणि) नेत्रावरकाधो लोमानि (कुवलैः) वदरैः (उतानि) नेत्रावरकोर्ध्व लोमानि चाभवन् येद्वे (भुक्ले) (न) च (असितम्) कृष्णां (पेशः) रूपं नेत्र गते रूपे (वसाते) आच्छादयाते ॥ ८९ ॥ **अथाध्यात्मम्** – (अश्विभ्याम्) नरनारायणदेवत्याभ्यां (ग्रहेभ्याम्) गृहरूपाभ्यां यजमानस्य (अमृतम्) (चक्षुः) कल्पिताभूत् (भृतेन) पक्वेन (छागेन) छागरूपेण (हविषा) हवीरूपेण (तेजः) चक्षुस्तेजः कल्पितमासीत् (गोधूमैः) गोधूमरूपैः (पक्ष्माणि) नेत्रावरकाधो लोमानि (कुवल्यैः) वदररूपैः (उतानि) नेत्रावरकोर्ध्व लोमानि कल्पितान्यभवन् येद्वे (भुक्ले) (न) च (असितम्) कृष्णां

**अश्विभ्याञ्चक्षुरमृतङ्ग्रहाभ्याञ्छागेनतेजोहविषाभृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि पेशोन भुक्लमसितं वसाते ॥ ८९ ॥ अविर्न मेषो नसि वीर्य्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् । सरस्वत्युपवाकैर्व्यानन्नस्यानि वर्हिर्वदरैर्ज्जजान ॥ ९० ॥**

(पेशः) रूपं नेत्र गते रूपे (वसाते) आच्छादयाते यथा श्रुतिः चक्षुषी एवास्याश्विनौ ग्रहौ १२ । ८ । ३ । ४ – ॥ ८९ ॥

ॐ अविर्नेत्यस्य विनियोगः पूर्ववत् १ **मंत्रार्थः** (अविः) (न) च (मेषः) (नसि) नासिकायां (वीर्याय) वलप्राप्तये कारणीभूताम् (ग्रहाभ्याम्) सारस्वताभ्याम् (प्राणस्य) (अमृतः) (पंथा) मार्गः प्राप्तोऽभूत (सरस्वती) (उपवाकैः) यवाङ्कुरैः (व्यानम्) (जजान) (वदरैः) सह (वर्हिः) (नस्यानि) नासिकाभवानि लोमानि । अभवत् ॥ ९० ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**अथाध्यात्मम्** (अविः) (न) च (मेषः) (नसि) नासिकायां छिद्र रूपौ (वीर्याय) प्राणायाम वलाय कल्पितौ (ग्रहाभ्याम्) सारस्वत ग्रह रूपाभ्यां (प्राणस्य) (अमृतः) (पन्था) मार्गः कल्पितः (सरस्वती) (उपवाकैः) यवाङ्कुर रूपैः (व्यानम्) (जजान) कल्पितवान् (वदरैः) सह (वर्हिः) वर्ही रूपाणि (नस्यानि) नासिक भवानि लोमानि। कल्पितानि यथा श्रुतिः नासिके ऽएवास्य सारस्वतौ ग्रहावथ यानि नासिकयो र्लोमानि तान्युपवाक सक्तवश्च वदर सक्तवश्च १२।८।३।५–९०

ओं इन्द्रस्येत्यस्य विनियोगः पूर्ववत्–१ **मंत्रार्थः** (वलाय) सामर्थ्याय (इन्द्रस्य) (रूपम्) (ऋषभः) चक्रे (कर्णाभ्याम्) श्रोत्र सम्बन्धिभ्यां (ग्रहाभ्याम्) (अमृतम्) भूत भविष्य द्वर्तमान शब्द ग्राहि (श्रोत्रम्) श्रोतेन्द्रिय

**इन्द्रस्य रूपमृषभो वलाय कर्णाभ्या श्रोत्रममृतङ्ग्रहाभ्याम्। यवा न वर्हि भ्रुवि केसराणि कर्कन्धुर्जज्ञे मधु सारघम्मुखात् ॥ ९१॥**

म भवत् (यवाः) (न) च (वर्हिः) (भ्रुवि) भ्रुवोः (केसराणि) लोमान्यभवन् (मुखात्) (कर्कन्धुः) वदरमेव (सारघम्) सरघा मधु मक्षिका तत्तुल्यं (मधु) लाला श्लेष्मादि (जज्ञे) ९१॥

**अथाध्यात्मम्**–(वलाय) योगवलाय (इन्द्रस्य) यजमानस्य। इन्द्रो वै यजमानः श० १।१।२।११ (रूपम्) (ऋषभः) ऋषभ रूपमभवत्। गावः पुरुषस्य रूपम् श० १२।८।३।४ (कर्णाभ्यां) ऐन्द्राभ्यां (ग्रहाभ्याम्) ऐन्द्र ग्रह रूपाभ्यां (अमृतम्) (श्रोत्रम्) कल्पितं (यवाः) (न) च (वर्हिः) तद्रूपे (भ्रुवि) (केसराणि) कल्पितानि (मुखात्) (कर्कन्धु) वदर रूपमेव (सारघम्) (मधु) (जज्ञे) यथा श्रुतिः श्रोत्रे ऽएवास्यैन्द्रौ ग्रहावथ यानि कर्णयोर्लोमानि यानि च भ्रुवोस्ता

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नियवसक्तवश्च कर्कन्धुसक्तवश्च १२। ८।३।५ — ॥ ९१॥ ओं आत्मन्नित्यस्य विनियोगः पूर्ववत्- १

**मंत्रार्थः** (उपस्थे) (न) च (आत्मन्) आत्मनि देहस्याधोभागे (लोम) लोमानि। जातावेक स्वनं (वृकस्य) लोमभिरभवन् (न) च (मुखे) (श्मश्रूणि) (व्याघ्रलोम) व्याघ्रलोमभिरभवन् (न) च (शीर्षन्) शीर्षि। शिरसि (यशसे) यशोऽर्थाय (केशाः) (श्रियै) शोभायै या (शिखा) या (कान्तिः) यानिच (इन्द्रियाणि) तत्सर्वं (सिंहस्य) (लोम) लोमभिरभवत् ॥ ९२॥

**अथाध्यात्मम्** (उपस्थे) (न) च (आत्मन्) देहस्याधोभागे (लोम) लोमान्येव (वृकस्य) लोमानि कल्पतानि (न) च (मुखे) (श्मश्रूणि) (व्याघ्रलोम) व्याघ्रलोमानि कल्पितानि (न) च (शीर्षन्) शिरसि (यशसे) यशोऽर्थाय-

**आत्मन्नुपस्थेन वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम। केशा न शीर्षन्यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि ॥ ९२॥ अंगान्यात्मन्भिषजा तदश्विनात्मानमङ्गैः समधात्सरस्वती। इन्द्रस्य रूपं शतमानमायुश्चन्द्रेण ज्योतिरमृतन्दधानाः ॥ ९३॥**

(केशाः) तथा (श्रियै) शोभायै या (शिखा) या (कान्तिः) यानिच (इन्द्रियाणि) तत्सर्वं (सिंहस्य) (लोम) लोमानि कल्पितानि यथा श्रुतिः यान्युपस्थे लोमानि यानिचाधस्तात्तानि वृकलोमान्यथ यान्युरसि लोमानि यानिच निकक्षयोस्तानि व्याघ्रलोमानि केशाश्च श्मश्रूणि चासिंह लोमानि १२। ८।३।६ — ॥ ९२॥ ओं अङ्गानीत्यस्य विनियोगः पूर्ववत्- १ **मंत्रार्थः** - (इन्द्रस्य) (रूपम्) च (शतमानम्) शतसंख्यापरमितं (अमृतम्) अल्प



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रहितं [५](आयुः) [६](चन्द्रेण) आल्हादकेन [७](ज्योतिः) ज्योतिषा सह [८](दधानाः) सम्पादयन्तः [९](भिषजा) भिषजौ [१०](अश्विना) अश्विनौ च [११](सरस्वती) [१२](आत्मन्) आत्मनि [१३](अङ्गानि) च [१४](तत्) [१५](आत्मानम्) [१६](अङ्गैः) [१७](समधात्) संदधे ॥ ९३ ॥

**अथाध्यात्मम्** [१](इन्द्रस्य) यजमानस्य [२](रूपम्) मोक्षार्हं च [३](शतमानम्) शताब्द परिमितं [४](अमृतम्) अल्प रहितं [५](आयुः) [६](चन्द्रेण) वैष्णवानामाल्हादकेन [७](ज्योतिः) ज्योतिषा सह [८](दधानाः) सम्पादयन्तः [९](भिषजा) संसार रोगनाशकौ [१०](अश्विना) नरनारायणौ [११](सरस्वती) वागधिष्ठात्री देवी च [१२](आत्मने) आत्मनि [१३](अङ्गानि) च [१४](तत्) [१५](आत्मानम्) [१६](अङ्गैः) [१७](समदधात्) संदधे यथा श्रुतिः त्रेधा विहितो वा ऽ अयं पुरुष स्यात्मात्मानमेवास्यते स्पृणोति यद् वाङ्नाभेस्तदाश्वि

**सरस्वती योन्याङ्गर्भमन्तरश्विभ्याम्पत्नी सुकृतम्बिभर्त्ति। अपा थं रसेन वरुणो न साम्नेन्द्र थं श्रियै जनयन्नप्सु राजा॥ ९४॥ तेजः पशूना थं हविरिन्द्रियावत्परिस्रुता**

नेन यदूर्ध्वं नाभेरवाचीन थं शीर्ष्णस्तत्सारस्वतेनाशिर ऐन्द्रेण यथा रूपमेव यथा देवतमात्मानं मृत्योस्पृत्वा मृतं कुरुते स वा ऽ एष आत्मैव यत्सौत्रामणी १२।८।३।७। ११— ॥ ९३ ॥

ओं सरस्वतीत्यस्य विनियोगः पूर्ववत्—१ **अथ मंत्रार्थः** [१](अश्विभ्याम्) अश्विनोः नरनारायणयोः [२](पत्नी) [३](सरस्वती) महावाक्। वाक्सरस्वती श० १३।९।१।१३ [४](सुकृतं) शुभकर्माणं [५](गर्भम्) इन्द्रं यजमानं वा [६](योन्याम्) [७](अन्तः) योनिमध्ये [८](बिभर्त्ति) [९](न) च [१०](अप्सु) कमलान्तरिक्षेषु [११](राजा) देवानां रूपेण राजमानः [१२](वरुणः) परमेश्वरः [१३](अपाम्) ब्रह्मांशु रूपाणां [१४](रसेन) [१५](साम्ना) महावाचा [१६](इन्द्रम्) इन्द्रं यजमानं वा [१७](श्रियै) राजलक्ष्म्यै यांगैश्वर्या

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यवा [१८](जनयन्) संस्कुर्वन् सन् विभर्त्ति ॥ ९४ ॥ ओं तेज इत्यस्य विनि योगः पूर्ववत्—१

**मंत्रार्थः** [१](भिषजा) भिषजाभ्यां संसार रोगस्य वैद्याभ्यां [२](अश्विभ्याम्) नरनारायणाभ्यां [३](सरस्वत्या) महावाचा च [४](इन्द्रियावत्) योग वीर्य वत् [५](सारघम्) मधु माक्षिका सम्बन्धि [६](मधु) मधुवत् [७](पशूनाम्) इन्द्रियाणां [८](तेजः) [९](हदिः) [१०]परिस्रुता) देहेन। शरीरं सुरा ग्रहाः श० १२।७।३।१६ [११](पयसा) प्राणेन। प्राणः पयः शीर्षस्त त्राणां श० ६।५।४।१५ [१२](दुग्धम्) स्रावितं तथा [१३](सुता सुताभ्यां) परिस्रुत्पयोभ्यां देह प्राणाभ्यां सकाशात् [१४](अमृतः) अमृत रूपः [१५](इन्दुः) ऐश्वर्यप्रदः [१६](सोमः) आत्म प्रति विंवः सोमो वै भ्राट् श० ३।२।४।९ दुग्धः ॥ ९५ ॥ ओं श्रीनरनारायणाभ्यां सरस्वत्यै देव्यै च नमो नमः-

**पयसा सारघम्मधु। अश्विभ्यान्दुग्धम्भिषजा सरस्वत्या सुतासुताभ्याममृतः सोमइन्दुः ॥ ९५ ॥ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि। मात्वाहिंसीन्मामाहिंसीः १**

इतिश्री भृगुवंशावतंस श्री नाथूराम सूनु ज्वालाप्रसाद शर्म्म कृते यजुर्वेदीय ब्रह्म भाष्ये सुरा दीन्द्राभिषेकान्तो नवदशोऽध्यायः १९ ॥ अथ विंशोऽध्यायः जानु प्रमाण पादां मुञ्ज रज्जु व्युता मासन्दी दक्षिणोत्तर वेद्यो र्मध्ये निदधाति तस्य मंत्रः का० १९।४।७ आसन्द्यां कृष्णाजिन मास्तृणाति का० १९।४।८ ओं क्षत्रस्येत्यस्य प्रजापति र्ऋषि र्द्विपदा विराड् गायत्री छन्द आसन्दी देवता १ ओं मात्वेत्यस्य प्रजापति र्ऋषिः प्राजापत्या गायत्री छन्दः कृष्णाजिनं देवतम् २

**मंत्रार्थः** – हे आसंदि त्वं [१](क्षत्रस्य) क्षतात्संसार रोगात्त्वात्मानं त्रायते तस्य यजमानस्य [२](योनिः) स्थानं [३](असि) [४](क्षत्रस्य) यजमानस्य [५](नाभिः) भोगायतन लोकस्योत्पत्ति स्थानं [६](असि) हे कृष्णाजिन् आसन्दी [७](त्वा) त्वां [८](मा) [९](हिंसीः) त्वं च



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(मा) मां (मा) (हिंसीः) ॥ १ ॥ **अथाध्यात्मम्** – हे मनः त्वं (क्षत्रस्य) जीवात्मनः (योनिः) स्थानं (असि) (क्षत्रस्य) जीवात्मनः (नाभिः) ब्रह्मप्राप्ति द्वारं (असि) हे हृदय मनः (त्वा) त्वां (मा) (हिंसीः) त्वंच (मा) मां यजमानं (मा) (हिंसीः) संसार वंधनेन ॥ १ ॥ यजमानः कृष्णाजिने उपविशति तस्य मंत्रः का० १९।४।९ आसान्द्या मुपविष्टस्य यजमानस्य पादयोर धो रुक्मौ मण्डलाकारौ भूषण विशेषौ न्यस्यति राजतं सव्ये मृत्योरिति मंत्रेण सौवर्णं दक्षे विद्योदिति सौवर्णं रुक्मं शिरसीत्येके तस्य मन्त्रौ का० १९।४।१०–११ ओंनिषसादेत्यस्य प्रजापतिर्ऋषिरार्च्युष्णिक् छन्दो यजमानो देवता १

**निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय सुक्रतुः। मृत्योः पाहि विद्योत्पाहि ॥ २ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम् पूष्णो हस्ताभ्याम्। आश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ३**

ओं २,३ मंत्रयोः प्रजापतिर्ऋषिर्दैवी बृहती छन्दो रुक्मौ देवते २,३ **मंत्रार्थः** प्रथमो व्याख्यातः हे रुक्मप्राणवा रुक्म एवेन्द्रः श० १०।४।१६ प्राण इन्द्रः श० ६।१।२।२८ (मृत्योः) अकालमरणान्मां (पाहि) रक्ष हे सौवर्ण मनो वा (विद्योत्) विद्युतः विद्युत्पातात्। क्विप्प्रत्यये गुणः (पाहि) रक्ष ॥ २ ॥

वेतसमात्रस्थापितैर्वसाग्रह शेषैः प्रतिदिशं स्थितोध्वर्युरामुखादवस्रावयन्नासन्दीस्थं सुरभिभिश्चंदन कर्पूर कस्तूरी केसरादिभिरुद्वर्तितं यजमानमभिषिञ्चति तस्य मंत्राः का० १९।४।१४ ओं देवस्येत्यस्याश्विनावृषी प्राजाप

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्या बृहती छन्दो लिङ्गोक्त देवता १ ओं सरस्वत्याश्विना वृष्यान्वी गायत्री छन्दो लिङ्गोक्त देवता २ ओं इन्द्रस्येत्यस्याश्विना वृष्यान्वी गायत्री छन्दो लिङ्गोक्त देवता ३ **मंत्रार्थः** – हे यजमान (सवितुः) (देवस्य) (प्रसवे) (आश्विनोः) (बाहुभ्याम्) (पूष्णः) (हस्ताभ्याम्) (आश्विनोः) (भैषज्येन) वैद्य कर्मणा (तेजसे) कान्त्यै (ब्रह्म वर्चसाय) (त्वा) त्वां (अभिषिञ्चामि) (सरस्वत्यै) सरस्वत्याः। षष्ठ्यर्थे चतुर्थी (भैषज्येन) भिषक्कर्मणा (वीर्याय) (अन्नाद्याय) अन्न भक्षण सामर्थ्याय (अभिषिञ्चामि) (इन्द्रस्य) (ऐन्द्रियेण) इन्द्रियसामर्थ्येन (बलाय) सामर्थ्याय (श्रिये) सर्वसमृद्ध्यै (यशसे) कीर्त्यै (अभिषिञ्चामि) ३

**अथाध्यात्मम्** हे यजमान (सवितुः) गुरोः (देवस्य) (प्रसवे) प्रेरणे सति (आश्विनोः) हृदय मनसोः (बाहुभ्याम्) (पूष्णः)

**कौसिकुतमोसिकस्मैत्वा कायत्वा। सुश्लोक सुमङ्गल सत्यराजन् ४**

मानस सूर्यस्य (हस्ताभ्याम्) (आश्विनोः) नरनारायण योः (भैषज्येन) वैद्य कर्मणा (तेजसे) (ब्रह्म वर्चसाय) (त्वा) त्वां (अभिषिञ्चामि) (सरस्वत्यै) महा वाचः (भैषज्येन) भिषक्कर्मणा (वीर्याय) योग बलाय (अन्नाद्याय) सर्वोपाधेः स्वात्म-निलय कारणाय (अभिषिञ्चामि) (इन्द्रस्य) महानारायणस्य (इन्द्रियेण) शक्त्या (बलाय) योग बलाय (श्रिये) योगलक्ष्म्यै (यशसे) कीर्त्यै (अभिषिञ्चामि) ॥ २३ ॥ अध्वर्युर्यजमानं स्पृशति का० १९। ४। १९ अध्वर्युणा स्पृष्टो यजमान आह्वयति का० १९। ४। २० ओं कोसीत्यस्य प्रजापतिर्ऋषिरुषिग्गर्भा प्राजापत्या गायत्री छन्दो यजमानो देवता १ **मंत्रार्थः** – हे यजमान त्वं (कः) ब्रह्मा शिवो वातयो रंशः (असि) (कतमः) विष्णुः विष्णवंशः (असि) (कस्मै) ब्रह्मणे शिवाय वा (त्वा) त्वामभिषिक्त वान् (काय) विष्णवे (त्वा) त्वामभि षिक्त वान्। यजमानो कथयति हे (राजन्)



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

राजमान [१०](सुश्लोक) सुकीर्त्ते [११](सुमंगल) [१२](सत्य) महानारायण ॥ ४॥ यजमानो यथालिङ्ग मङ्गान्या लभते तस्य प्रथमो मंत्रः १

ओं शिरोम इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द इन्द्र शरीरा वया देवताः **मंत्रार्थः** यजमान आत्मानं सर्वात्मकं पश्यन्ना

ह [१](मे) मम [२](शिरः) [३](श्रीः) प्रभा रूपं ब्रह्म वर्चसो लाभात् [४](मुखम्) [५](यशः) वेदपाठात् [६](केशाः) [७](च) [८](श्मश्रूणि) [९](त्विषिः) दीप्तिः

हृदये ब्रह्माग्नेः प्रज्वलनात् [१०](मे) [११](राजा) दीप्यमानः [१२](प्राणः) [१३](अमृतम्) समाधि लाभात् [१४](चक्षुः) इन्द्रियं [१५](सम्राट्) सम्यक्

राजमानं दिव्य दृष्टि लाभात् [१६](श्रोत्रम्) इन्द्रियं [१७](विराट्) विविधं राजमानं दूर श्रवण शक्ते र्लाभात् ॥ ५॥

द्वितीयो मंत्रः ओं जिह्वाम इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द इन्द्र श० देवता १

**शिरो मे श्री र्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि। राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ ५॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रम्मे सहः ॥ ६॥**

**मंत्रार्थः**– [१](मे) [२](जिह्वा) [३](भद्रम्) कल्या रूपा [४](वाक्) [५](महः) पूज्य माना वैदिक सिद्धान्त कथनात्। महतेरसुन् प्रत्ययः [६](मनः) [७](मन्युः) अहङ्कार रूपं अहं ब्रह्मास्मीत्युच्चारणात् [८](भामः) मानस सूर्यः [९](स्वराट्) स्वेनैव राजमानः समष्टि भाव लाभात् [१०](अङ्गुल्यः) [११](मोदाः) आनन्द रूपाः करन्यासात् [१२](अङ्गानि) [१३](प्रमोदाः) परमानन्द रूपाः अङ्गन्यासात् [१४](मे) [१५](मित्रम्) (म, अपरा प्रकृतिः (इ) परा प्रकृति स्तयो रक्षकं त्रानं [१६](सहः) संसारोपाधेर्नाशकं ॥ ६॥ तृतीयो मंत्रः ओं वाहूम इत्यस्य प्रजापति

र्ऋषिर्गायत्री छन्द इन्द्र शरीरा वया देवताः १

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मंत्रार्थः - [१] (मे) [२] (वाहू) [३] (इन्द्रियम्) च [४] (वलम्) आधिदैवाध्यात्मवलरूपम् [५] (मे) [६] (हस्तौ) [७] (कर्मवीर्यम्) देवार्चनवलरूपौ [८] (मम) [९] (आत्मा) [१०] (उरो) तस्य स्थानं हृदयञ्च [११] (क्षत्रम्) क्षतात्संसारात्त्राण करं ॥ ७ ॥ ओं पृष्ठीरित्यस्य प्रजापतिर्ऋषिर्निचृदनुष्टुप् छन्द इन्द्र शरीरावयवा देवताः [१] (पृष्ठीः) पृष्ठे मेरुदण्ड वाह्यस्था सुषुम्णा [२] (मे) [३] (राष्ट्रम्) वास स्थानं [४] (उदरम्) [५] (अंसौ) स्कन्धौ [६] (ग्रीवाः) कंठ देशाः [७] (श्रोणी) कटि देशौ [८] (उरू) सक्थिनी [९] (अरत्नी) हस्त देशौ [१०] (जानुनी) [११] (च) [१२] (सर्वतः) [१३] (अङ्गानि) [१४] (मे) [१५] (विशः) प्रजाः न कामस्य ॥ ८ ॥ ओं नाभिर्म इत्यस्य प्रजापतिर्ऋषिर्निचृज्जगती छन्द इन्द्र शरीरावयवा देवताः ॥

वाहू मे वलमिन्द्रियꣳ हस्तौ मे कर्म्म वीर्य्यम् । आत्मा क्षत्र मुरो मम ॥ ७ ॥
पृष्ठीर्म्मे राष्ट्र मुदर मꣳसौ ग्रीवाश्च श्रोणी । ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ८
नाभिर्म्मे चित्तं विज्ञानम्पायुर्म्मेऽपचितिर्भसत् । आनन्दनन्दा वाण्डौ मे भगः सौभाग्यम्पसः जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मि विशि राजा प्रतिष्ठितः ९

[१] (मे) [२] (नाभिः) [३] (चित्तं) ज्ञान रूपं तस्मिन् लक्ष्मी नारायण यो र्ध्यानात् [४] (मे) [५] (पायुः) गुदेन्द्रियं [६] (विज्ञानम्) श्री गणेशस्य ध्यानात् [७] (भसत्) भगेन्द्रियं [८] (अपचितिः) ऋतु काला दृते मैथुन रहिता [९] (मे) [१०] (आण्डौ) वृषणौ [११] (आनन्दनन्दौ) ब्रह्मानंद नन्दौ [१२] (पसः) लिङ्गं । पसतेः स्पृशति कर्मा निघ० [१३] (भगः) योगैश्वर्यसम्पन्नं [१४] (सौभाग्यं) योग सम्पत्ति सम्पन्नञ्च [१५] (जङ्घाभ्याम्) [१६] (पद्भ्याम्) चाहं [१७] (धर्मः) धर्म रूपः [१८] (अस्मि) न विषयासक्तः [१९] (विशि) प्राणे । प्राणो मनुष्याः श० १४।४।३।१३ [२०] (प्रतिष्ठितः) अहं [२१] (राजा) राज मानोऽस्मि ॥ ९ ॥



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आसन्दी तो यजमानः कृष्णाजिने अव तरति तस्य मंत्रः का० १९।४।२३ ॐ प्रति क्षत्र इत्यस्य प्रजापतिर्ऋषिः शक्करी छंदो विश्वेदेवा देवताः १ **मंत्रार्थः** – अहं [1](क्षत्रे) क्षत्रिय जातौ [2](प्रतितिष्ठामि) प्रतिष्ठा युक्तो भवामि [3](राष्ट्रे) देशे [4](प्रति) प्रतिष्ठामि वशी करोमि [5](अश्वेषु) [6](प्रति) [7](गोषु) [8](प्रति) [9](अङ्गेषु) [10](प्रति) नीरोगत्वाय [11](आत्मन्) आत्मनि चित्ते [12](प्रति) निराधित्वाय [13](प्राणेषु) [14](प्रति) [15](पुष्टे) धनसमृद्धौ [16](प्रतितिष्ठामि) [17](द्यावा पृथिव्योः) [18](प्रतितिष्ठामि) कीर्त्या [19](यज्ञे) [20](प्रतितिष्ठामि) धनलाभाय ॥ १० ॥ **अथाध्यात्मम्**- अहं (क्षत्रे) क्षताद्रक्षके मनसि [2](प्रतितिष्ठामि) [3](राष्ट्रे) ब्रह्म देशे हृदये [4](प्रति) प्रतितिष्ठा

**प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु। प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन्प्रति प्राणेषु प्रतितिष्ठामि पुष्टे प्रति द्यावा पृथिव्योः प्रतितिष्ठामि यज्ञे॥१०॥**

**त्रया देवा एकादश त्रयस्त्रि ꣳ शाः सुराधसः। बृहस्पतिपुरोहिता देवस्य सवितुः सवे। देवा देवैरवन्तु मा॥११॥**

मि [5](अश्वेषु) कर्मेन्द्रियेषु [6](प्रति) [7](गोषु) ज्ञानेन्द्रियेषु [8](प्रति) [9](अङ्गेषु) देहाङ्गेषु [10](प्रति) [11](आत्मन्) आत्मनि चित्ते [12](प्रति) [13](प्राणेषु) [14](प्रति) [15](पुष्टे) योगैश्वर्ये [16](प्रतितिष्ठामि) [17](द्यावा पृथिव्योः) ब्रह्मपुर शरीरे [18](प्रतितिष्ठामि) [19](यज्ञे) यज्ञ पुरुषे [20](प्रतितिष्ठामि) ॥ १० ॥ शस्त्रान्ते जुहोतितस्य प्रथमो मंत्रः का० १९।५।८ ॐ त्रया देवे त्यस्य प्रजापतिर्ऋषिः स्वअवसाना पंक्तिश्छन्दो विश्वेदेवा देवताः १ **मंत्रार्थः** [1](सुराधसः) श्रेष्ठ धन वन्तः। राध इति धन नाम [2](बृहस्पति पुरोहिताः) ब्रह्म एव पुरोहित करो येषान्ते। ब्रह्म वै बृहस्पतिः श० ३।१।४।१५ [3](त्रयाः) त्रयो देवाः [4](एकादश देवाः) [5](त्रयस्त्रि ꣳ शाः)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(देवाः)[6] (सवितुः)[7] (देवस्य)[8] महानारायणस्य (सवे)[9] आज्ञायां वर्त्तमानाः सन्तः (देवैः)[10] अग्रमंत्र कथितैः सत्यादिभिः सह (मा)[11] मां (अवन्तु)[12] अत्र श्रुतिः। अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त्रऽएकत्रिंशादिन्द्रश्चैव प्रजापतिश्च १४।६।३—॥ ११॥ द्वितीयो मंत्रः ओं प्रथमेत्यस्य प्रजापतिर्ऋषिः प्रकृतिश्छन्दो विश्वेदेवा देवताः १

**मंत्रार्थः** पूर्वमंत्र कथिताः (प्रथमाः)[1] देवाः (द्वितीयैः)[2] देवैः (द्वितीयाः)[3] देवाः (तृतीयैः)[4] देवैः सह (तृतीयाः)[5] देवाः (सत्येन)[6] ब्रह्मणा (सत्यं)[7] ब्रह्म (यज्ञेन)[8] (यज्ञः)[9] (यजुर्भिः)[10] (यजूंषि)[11] (सामभिः)[12] (सामानि)[13] (ऋग्भिः)[14] (ऋचः)[15] (पुरोनुवाक्याभिः)[16] ऋग्भेदैः (पुरोनुवाक्याः)[17] (याज्याभिः)[18] ऋग्विशेषैः (यज्याः)[19] (वषट्कारैः)[20] हविस्त्यागैः (वषट्काराः)[21] (आहुतिभिः)[22] (आहुतयः)[23] (मे)[24] (कामान्)[25] (समर्द्धयन्तु)[26] पूरयन्तु (भूः)[27] ते ब्रह्म प्रादुर्भावास्तेभ्यः (स्वाहा)[28] यथा भगवद्वाक्यं ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणाहुतम् ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ॥ १२॥

प्र॒थ॒मा द्वि॒तीयै॑र्द्वि॒तीया॑स्तृ॒तीयै॑स्तृ॒तीयाः॑ स॒त्येन॑ स॒त्यं य॒ज्ञेन॑ य॒ज्ञो यजु॑र्भि॒र्यजूं॑षि॒ सामा॑भि॒स्सामा॑न्यृ॒ग्भिर्ऋ॒चः पु॑रोऽनु॒वा॒क्याभिः॑ पुरोनु॒वा॒क्या या॒ज्या॒भि॒र्या॒ज्या व॑षट्का॒रैर्व॑षट्का॒रा आहु॑ति॒भि॒राहु॑तयो मे॒ कामा॒न्त्सम॑र्द्धयन्तु॒ भूः स्वाहा॑ ॥ १२॥ लोमा॑नि॒ प्रय॑ति॒र्मम॒ त्वङ्म॒ आन॑ति॒राग॑तिः। मा॒ꣳस॑म्म॒ उप॑न॒ति॒र्वस्व॒स्थि म॒ज्जा म॒ आन॑तिः॥ १३॥

यजमानो ग्रहशेषं प्रत्यक्षमुपहूव पूर्वकं भक्षयति तस्य मंत्रः का० १९।५।१० ओं लोमानीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो लिङ्गोक्त देवताः १

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**मंत्रार्थः** (प्रयतिः) यस्योदये प्रयत्नो भवति तत्त्रानं (मम) (लोमानि) तथा (आनतिः) भूतानांनमनं यस्मिन् तद्यशः (आगतिः) आनंदस्य प्राप्तिर्यस्मिन्त द्वीर्यञ्च (मे) (त्वक्) तथा (उपनतिः) समीपे भूतानांनमनं यस्मिन्त दैश्वर्यं (मे) (मांसं) तथा (वसु) पूर्णसम्पत्तिर्मे (अस्थि) तथा (आनतिः) आसमन्तान्नमनं यस्मिन्त द्वैराग्यं (मे) (मज्जा) षडैश्वर्यरूपोस्मीत्यर्थः यथा श्रुतिः एषलोकांश्च देवतांश्चविशति यः सौत्रामण्याभिषिच्यते तदेतद्वान्तरात्मानमुपह्वयते तथा कृत्स्नएवसर्वतनूः साङ्गः सम्भवति ॥ १२।८।३।३१– ॥ १३ ॥ इतउत्तरमवभृथः सार्धकंडिकाचतुष्कात्मकेनमंत्रेणमासर

**यद्देवा देवहेडनन्देवासश्चकृमा वयम्। अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १४ ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमा वयम्। वायुर्म्मातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १५ ॥ यदिजाग्रद्यदिस्वप्न एनाꣳसिचकृमा वयम्। सूर्य्योमातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः १६**

कुम्भंजलेतारयंति तस्य प्रथमो मंत्रः का० १९।५।१३ ॐ यद्देवा इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता १

**मंत्रार्थः** हे (देवाः) नानाव्रतादिक्रीडनशीलाः (देवासः) ब्रह्मपरा महानारायणाः (वयम्) (यत्) (देवहेडनं) देवानामपराधं (आचकृम) कृतवन्तः। करोतेर्लिट् (अग्निः) (तस्मात्) (एनसः) पापात् (विश्वात्) (अꣳहसः) विघ्नात् (मां) मां (मुञ्चतु) ॥ १४ ॥ द्वितीयो मंत्रः ॐ यदीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो वायुर्देवता १

**मंत्रार्थः** (ई) हे देवि (वयम्) (दिवा) अहनि (नक्तं) रात्रौ (यत्) (यत्) (एनाꣳसि) पापानि (आचकृम) (वायुः)

(तस्मात्)(एनसः)(विश्वात्) सर्वस्मात् (अंहसः) (मा) मां (मुञ्चतु)॥ १५॥

तृतीयो मंत्रः ओं यदीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः सूर्यो देवता १ **मंत्रार्थः** (ई) हे देवि (वयम्) (जाग्रत्) जाग्रति मनुष्येषु (स्वप्ने) पितृषु यथा श्रुतिः मनुष्या वै जागरितं पितरः सुप्तं १२।९।२।२ (यत्) (यत्) (एनांसि) (आचकृम) (सूर्यः) (तस्मात्) (एनसः)(विश्वात्)(अंहसः)(मा) मां (मुञ्चतु)॥ १६॥ चतुर्थो मंत्रः ओंयद्ग्रामइत्यस्य प्रजापतिर्ऋषिर्निचृदनुष्टुप् छन्दो लिङ्गोक्त देवता १ **मंत्रार्थः** हे (यत्) (य) वायुः (अ) अग्निः (त) सूर्यः हे वाय्वग्निसूर्यरूप महानारायण (वयम्)

**यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसि॥ १७॥ यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च। अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देवरिषस्पाहि॥ १८॥**

(यत्)(एनः) पापं (ग्रामे) (यत्) (अरण्ये) (यत्) (सभायाम्) (यत्) (इन्द्रिये) इन्द्रियसमूहे (यत्) (शूद्रे) दासवर्गे (यत्) (अर्ये) स्वामिनि (यत्) (एकस्य) ब्रह्मणः (अधिधर्मणि) भक्तियोगादिधर्मविषये (आचकृम) (तस्य) सर्वस्य पापस्य त्वं (अवयजनम्) नाशनं नाशकारणं। अव पूर्वो यजिर्नाशनार्थः (असि)॥ १७॥

यदापः (व्याख्यातम् (६, २२) अर्द्धमंत्रेण सुराकुम्भस्य जले मज्जनम् का० १९।५।१४ अवभृथेति। व्याख्यातम् (३, ४८, ८, २५) इयान्विशेषः (अवायक्षि) नाशितवानस्मि। यजेर्लुङि तङि उत्तमैकवचने रूपम्॥ १८॥



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यजमानोऽवभृथप्रदेशाद्द्वौ विक्रमौ उदीच्यां गत्वा जलाञ्जलिमादाय यस्यां दिशि रिपुस्तां प्रति सिञ्चति का० १९।५।१५ (व्याख्यातम्) (६,२२) ॥ १९॥ जलस्था वेवजायापती सौमिकावभृथवत्स्नात्वा कर्मकाले धृतं वासोऽप्सु-क्षिपतस्तस्य मंत्रः का० १९।५।१६ ॐ द्रुपदादित्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्द आपो देवता १

**मंत्रार्थः** –[1](आपः) जलानि यद्वा ब्रह्माम्बुरूपा पः [2](मा) मां [3](एनसः) पापात् [4](शुन्धन्तु) पुनन्तु पापात्पृथक् कुर्वन्तु [5](इव) यथा [6](द्रुपदात्) द्रुतरुः तन्मयं पदं द्रुपदं पादुका तस्मात् [7](मुमुचानः) पृथग्भवन् मुचेर्विकरण व्यत्ययेन शान-

**समुद्रेते हृदयमप्स्वन्तः सन्त्वा विशन्त्वोषधीरुतापः । सुमित्रिया न आप ओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः । १९।**

**द्रुपदादिवमुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः २०॥**

चिजुहोत्यादित्वाद्द्वित्वे मुमुचान इति रूपम् [8](इव) यथा वा [9](स्विन्नः) स्वेदयुक्तः पुरुषः [10](स्नातः) सन् [11](मलात्) [12](वा) यथा वा [13](पवित्रेण) कम्बलमयेन [14](पूतं) गालितं [15](आज्यं) शुद्धं भवति ॥ २०॥

सोमवज्जलान्निष्क्रमण मागमनञ्चतस्य मंत्रः का० १९।५।१७ ॐ उद्वयमित्यस्य प्रस्कण्वऋषिरनुष्टुप् छन्दः सूर्यो देवता १ **मंत्रार्थः** –[1](तमसः) मायान्धकाराद्वा पापाद्वा। पाप्मा वै तमः श० १२।९।२।८ [2](परि) [3](उत्तमम्) उत्कृष्टतरं [4](स्वः) महानारायणलोकं [5](पश्यन्तः) सन्तः [6](वयम्) [7](देवत्रा) तस्मिन्लोके [8](देवम्) नानावतारैः क्रीडनशीलं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(ज्योतिः) ज्योतिः स्वरूपं (उत्तमम्) (सूर्यम्) महा नारायणं (उदगन्म) प्राप्ताः ॥ २१ ॥

यजमान आहवनीय मुपतिष्ठते का० १९।५।१८ ओं अप इत्यस्य प्रजापति र्ऋषिः पंक्ति श्छन्दो ऽग्नि र्देवता १

हे (अग्ने) (अद्य) (अपः) जलं (अन्वचारिषम्) अवभृथ कर्मणा प्राप्तो ऽस्मि। चरते र्लुङ् (रसेन) (समसृक्ष्महि) संसृष्टो ऽस्मि। सृजे र्लुङ् वचन व्यत्ययः (पयस्वान्) उदक वान्सन् (आगमम्) आगत वानस्मि। गमे र्लुङि पुषादीति च्लेरङ् (तम्) (मा) मां (वर्चसा) ब्रह्म वर्चसेन (च) (प्रजया) पुत्रादिकया (च) (धनेन) सुवर्णादिकेन (संसृज) त्वं संयोजय ॥ २२

अथाध्यात्मम् – हे (अग्ने) ब्रह्माग्ने (अद्य) (अपः) ब्रह्मांभु रूपापः (अन्वचारिषम्) (रसेन) (समसृक्ष्महि)

**उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम्। देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् २१**
**अपो अद्यान्वचारिषꣳ रसेन सम सृक्ष्महि। पयस्वानग्न आगमन्तम्मा सꣳसृज वर्च्चसा प्रजया च धनेन च २२**

(पयस्वान्) अमृत वान्सन्। अमृतं वा ऽआपः श० ४।४।३।१५ (आगमम्) (तम्) (मा) मां (वर्चसा) ब्रह्म वर्चसेन (च) (प्रजया) प्राणेन। प्राणः प्रजा श० १४।४।३।१४ (च) (धनेन) योग धनेन (संसृज) संयोजय ॥ २२ ॥

यजमानः समिधं गृहीत्वा ऽग्नौ दधाति तस्य मंत्रः का० १९।५।१९ यजमानः सकृद् गृहीत माज्यं कण्डिका शेषेण जुहोति तस्य मंत्रः का० १९।५।२० ओं एधो ऽसीत्यस्य प्रजापति र्ऋषिः प्राजापत्या बृहती छन्दः समि द्देवता १

ओं समावर्त्तीत्यस्य प्रजापति र्ऋषि र्ब्राह्म्युष्णिक् छन्दो ऽग्नि र्देवता २



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**मंत्रार्थः** हे समित् यद्वा हे प्राण त्वं । प्राणा वै समिधः श० १।५।४।१ (एधः) दीपिका (असि) (एधिषीमहि) वयं त्वत्प्रसादाद्वृद्धिं प्राप्नुयाम । एधने राशी र्लिङ् तथा (समित्) दीपयति सा (असि) (तेजः) (असि) (मयि) (तेजः) (धेहि) धारय (पृथिवी) (समावर्त्ति) ब्रह्मणि लयं प्राप्नोति । विकरण व्यत्ययेन वृत्तेः शपः श्लुः (उषाः) दिवसोऽपि (सम्) समावर्त्ति (सूर्यः) (उ) अपि (सम्) समावर्त्ति (इदम्) (विश्वम्) सर्वं (जगत्) (उ) अपि (सम्) समावर्त्ति तस्मादहं (वैश्वानरज्योतिः) विश्वेभ्यो नरेभ्यो हितो वैश्वानरः परमात्मा तद्रूपं ज्योतिर्ब्रह्मैव (भूयासं) (विभून्) महतः (कामान्) षडैश्वर्यं (व्यश्नवै) प्राप्नुयाम् (भूः) भुवनं भूः सत्तामात्रं ब्रह्म तस्मै (स्वाहा) सुहुतमस्तु ॥ २३ ॥

**एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि । समाववर्त्ति पृथिवी समुषाः समु सूर्य्यः । समु विश्वमिदं जगत् । वैश्वानरज्योतिर्भूयासं विभून् कामान्व्यश्नवै भूः स्वाहा ॥ २३ ॥ अभ्यादधामि समिधमग्ने व्रतपते त्वयि । व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितोऽअहम् ॥ २४ ॥**

यजमान आहवनीये तिस्रः समिधोऽभ्यादधाति तस्य प्रथमो मंत्रः का० १९।५।२१ ओं अभ्यादधामीत्यस्याश्वतराश्विऋषिर्निचृदनुष्टुप् छन्दोऽग्निर्देवता १ **मंत्रार्थः** हे (व्रतपते) व्रतस्य पालक (अग्ने) अग्ने आत्माग्ने वा (समिधं) समिधं प्राणं वा (त्वयि) (अभ्यादधामि) तथा (दीक्षितः) सन् (अहम्) (व्रतम्) कर्म (च) (श्रद्धाम्) (उपैमि) उपगच्छामि (च) (त्वा) त्वां (इन्धे) दीपयामि ॥ २४ ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द्वितीयो मंत्रः ओं यत्रेत्यस्याप्रवतराम्वि ऋषिरनुष्टुप् छन्दोऽग्निर्देवता १ **मंत्रार्थः** (यत्र) (ब्रह्म) ब्राह्मण जातिः (च) (क्षत्रं) क्षत्रियजातिः (च) अपि (सह) (सम्यञ्चौ) संगतौ (चरतः) तिष्ठतः (यत्र) (देवाः) (अग्निना) (सह) वर्तन्ते (तम्) (पुण्यम्) पवित्रं (लोकम्) देवलोकं (प्रज्ञेषं) जानीयाम् ॥ २५ ॥

**अथाध्यात्मम्** (यत्र) भ्रकुटि कमले (ब्रह्म) मनः। मनो वै ब्रह्म श० १४।६।१०।१४ (च) (क्षत्रं) प्राणाः। प्राणो वै क्षत्रं श० १४।८।१४।४ (च) अपि (सह) (सम्यञ्चौ) संगतौ (चरतः) तिष्ठतः (यत्र) (देवाः) विद्वांसः। विद्वांसो हि देवाः श० ३।७।३।१० (अग्निना) ब्रह्माग्निना (सह) वर्तन्ते (तम्) (पुण्यम्) पवित्रं (लोकम्) भ्रकुटिचक्रं (प्रज्ञेषं) जानीयाम् ॥ २५ ॥

**यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह। तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥ २५ ॥ यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह। तं लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते। २६।**

तृतीयो मंत्रः ओं यत्रेन्द्र इत्यस्याप्रवतराम्वि ऋषिर्निचृदनुष्टुप् छन्दोऽग्निर्देवता १

**मंत्रार्थः** (यत्र) (इन्द्रः) (च) (वायुः) (च) अपि (सह) (सम्यञ्चौ) संगतौ (चरतः) तिष्ठतः (यत्र) यस्मिन् लोके (सेदिः) दुःखं (न) (विद्यते) (तम्) (पुण्यम्) (लोकम्) देवलोकं (प्रज्ञेषं) जानीयाम् ॥ २६ ॥

**अथाध्यात्मम्** (यत्र) यस्मिन् भ्रकुटि कमले (इन्द्रः) यजमानः। इन्द्रो वै यजमानः श० २।१।२।११ (च) (वायुः) प्राणाः (च) अपि (सह) सम्यञ्चौ सङ्गतौ (चरतः) तिष्ठतः (यत्र) (सेदिः) दुःखं (न) विद्यते (तम्) (पुण्यम्)



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

(लोकम्)[१३] (मत्तेषं)[१४] जानीयाम। जानतेः सिब्वद्धलं लेटीति सिपीटिच रूपम्॥२६॥

ओं अंमु नेत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः सुरा देवता१ **मंत्रार्थः** हे सुरे (ते)[१] तव (अंमुः)[२] भागः (अंमुना)[३] सोमभागेन (परूः)[४] तव पर्व (परूषा)[५] सोमस्य पर्वणा सह (एन्च्यताम्)[६] संयुज्यताम् (तव)[७] (गन्धः)[८] (अच्युतः)[९] अनश्वरः (रसः)[१०] च (मदाय)[११] (सोमम्)[१२] (अवतु)[१३] आलिङ्गतु॥२७॥ **अथाध्यात्मम्** हे शरीर (ते)[१] तव (अंमुः)[२] आत्मसम्बन्धि तेजः (अंमुना)[३] आत्मप्रतिबिंबस्य तेजसा (परूः)[४] तव भागः (परूषा)[५] आत्मप्रतिबिंबस्य भागेन (एन्च्यताम्)[६] (तव)[७] (गन्धः)[८] इन्द्रियाणां धारक इन्द्रिय शक्ति समूहः (अच्युतः)[९] (रसः)[१०] रागः (मदाय)[११] अहं ब्रह्मास्मीति मदाय (सोमम्)[१२]

**अ॒ꣳशुना॑ ते अ॒ꣳशुः पृ॑च्यता॒म्परु॑षा॒ परुः॑। ग॒न्धस्ते॒ सोम॑मवतु॒ मदा॑य॒ रसो॒ऽअच्यु॑तः॥२७॥ सि॒ञ्च॑न्ति॒ परि॑ षिञ्च॒न्त्युत्सि॑ञ्चन्ति पुन॑न्ति च। सुरा॑यै ब॒भ्र्वै मदे॑ कि॒न्त्वो व॑दति कि॒न्त्वः॥२८**

आत्मप्रतिबिंबं (अवतु)[१३] आलिङ्गतु॥२७॥ ओं सिञ्चन्तीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः सुरा देवता१ **मंत्रार्थः** यस्मात् (त्वः)[१] एकः पुरुषः (बभ्र्वै)[२] बभ्रुवर्णायै (सुरायै)[३] (किम्)[४] कुत्सितं वचनं (वदति)[५] (त्वः)[६] एकः पुरुषः (मदे)[७] (किम्)[८] कुत्सितं वदति तस्मात्तां सुरां पात्रे (सिञ्चन्ति)[९] तथा पयआदिभिः (परिषिञ्चन्ति)[१०] तथा ग्रहैः (उत्सिञ्चन्ति)[११] (च)[१२] गोवालहिरण्यादिभिः (पुनन्ति)[१३] सोमरूपं कुर्वन्ति॥२८॥

**अथाध्यात्मम्** (यस्मात् (त्वः)[१] एको विद्वान् (बभ्र्वै)[२] पिङ्गलवर्णायै (सुरायै)[३] देहाभिमानाय। तमः सुरा श०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

५।१।५।२८ (किम्) कुत्सितं (वदति) (त्वः) एको देहाभिमानी (मदे) विषयमदे सति (किम्) कुत्सितं वदति तस्मात् देहस्थं भूतात्मनं योग पात्रे (सिञ्चन्ति) पुनः प्राणादिभिः (परिषिञ्चन्ति) पुन इन्द्रिय शक्तिभिः उत्सिञ्चन्ति (च) (पुनन्ति) शुद्धं कुर्वन्ति ॥ २८ ॥ ओं धानावन्तमित्यस्य विश्वामित्र ऋषि र्गायत्री छन्द इन्द्रो देवता १

**मंत्रार्थः** हे (इन्द्र) (प्रातः) प्रातः काले (नः) अस्माकं (धानावन्तं) धाना विद्यन्ते यत्रतं (करम्भिणं) करम्भवन्तं अपूपवन्तं (उक्थिनं) शस्त्र वन्तं स्तुति युक्तं पुरोडाशं (जुषस्व) ॥ २९ ॥

**अथाध्यात्मम्** हे (इन्द्र) परमेश्वर। इदऐश्वर्ये (प्रातः) मोक्ष काले (नः) अस्माकं (धानावन्तं) अहोरात्र म-

धानावन्तङ्करम्भिणमपूपवन्तमुक्थिनम्। इन्द्र प्रातर्ज्जुषस्वनः ॥ २९ ॥
बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्। येन ज्योतिरजनयन्नृतावृधो देवन्देवाय जागृवि ॥ ३० ॥

ध्ये वर्त्तमानं। अहोरात्राणां वा एतद्रूपं यद्धानाः श० १३।२।१।४ (करम्भिणं) (क) घ्राणेन्द्रियं (अ) चक्षुः (र) वाक् (अ) त्वक् (म) मेधा (भ) श्रोत्रेन्द्रियं तद्वन्तं (अपूपवन्तं) (अ) निवृत्तिः (प) प्रीतिर्भक्तिः (ऊ) शान्तिः (प) मनस्तद्वन्तं (उक्थिनं) प्राणवन्तमात्मानं। प्राणो वा उक्थं प्राणो हीदं सर्व मुत्थापयति श० १४।८।१४।१ (जुषस्व) २९ अध्वर्यु प्रेषितो ब्रह्मा इन्द्रदेवतायां बृहत्यां साम गायतितस्य मंत्रः का० १९।५।२ ओं बृहदिन्द्रायेत्यस्य नृमेधपुरुषमेधा वृषी बृहती छन्द इन्द्रो देवता १



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

**मंत्रार्थः** हे (मरुतः) ऋत्विजो वागाद्यृत्विजो वा (इन्द्राय) परमेश्वराय (वृत्र हन्तमम्) अतिशयेन पापनाशकं (बृहत्साम) (गायत) (ऋतावृधः) यज्ञ वृद्धि करा ऋत्विजः (येन) (देवाय) यजमानाय (देवम्) नाना व्रतादैः क्रीडन शीलं (जागृवि) जागरण शीलं (ज्योतिः) ज्योतिः स्वरूपं महानारायणं (अजनयन्) उदपादयन् ॥ ३० ॥

ब्रह्मापयोऽनुमंत्रयते का० १९।२।११ ॐ अध्वर्यवित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्द इन्द्रो देवता १

**मंत्रार्थः** हे (अध्वर्यो) त्वं (अद्रिभिः) ग्रावभिः (सुतम्) अभिषुतं (सोमं) (पवित्रे) कम्बलमये (आनय) सिञ्च (इन्द्राय) (पातवे) इन्द्रस्य पानार्थं । तुमर्थे तवे प्रत्ययः (पुनाहि) पुनीहि गालय । ईत्वाभाव आर्षः ॥ ३१ ॥

**अध्वर्य्योऽअद्रिभिः सुतꣳ सोमम्पवित्रऽआनय । पुनाहीन्द्राय पातवे ॥ ३१ ॥**
**यो भूतानामधिपतिर्य्यस्मिँल्लोका अधि श्रिताः । यऽईशे महतो महांस्तेन गृह्णामि त्वामहम्मयि गृह्णामि त्वामहम् ॥ ३२ ॥**

**अथाध्यात्मम्** — हे ज्ञानचक्षुः । चक्षुर्वै यज्ञस्याध्वर्युः श० १४।६।१।६ (अद्रिभिः) प्राणैः । प्राणा वै ग्रावाणः श० १४।२।२।३३ (सुतम्) अभिषुतं (सोमम्) आत्म प्रति बिंबं । सोमो वै भ्राट् श० ३।२।४।९ (पवित्रे) प्राणे । पवित्रं वै प्राणो दानौ श० १।१।३।१ (आनय) सिञ्च (इन्द्राय) (पातवे) महानारायण पानार्थं (पुनाहि) ॥ ३१ ॥

त्रयस्त्रिंशं वसाग्रहं गृह्णाति का० १९।४।२४ ॐ यो भूतानामित्यस्य कौण्डिन्य ऋषिः पंक्तिश्छन्दो ग्रहो देवता १

**मंत्रार्थः** — आत्मा कथयति (यः) महानारायणः (भूतानाम्) (अधिपतिः) (यस्मिन्) (लोकाः) (अधिश्रिताः)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आश्रिताः यदा धाराः [7](महान्) सर्वोत्कृष्टः [8](यः) महानारायणः [9](महतः) ब्रह्मविष्णु महेशादिरूपस्य साकारस्य ब्रह्मणः [10](ईशे) नियन्ता वर्तते। लोपस्त आत्मनेपदेष्विति तलोपे लटि तङि प्रथमैकवचने ईशे इति रूपम् अधीगर्थ दयेशामिति कर्मणि षष्ठी हे ग्रह आत्मप्रतिविंब वा [11](अहम्) आत्मा [12](तेन) महानारायणेन कृत्वा [13](त्वा) त्वां [14](गृह्णामि) [15](मयि) परमात्मभावमापन्नेम यिविषये [16](अहम्) [17](त्वा) [18](गृह्णामि) ॥ ३२॥ व्याख्याता (१९,२३)—॥३३॥

सशस्त्र ग्रह होमानन्तरं शेषमृत्विजः सर्वे वजि घ्नन्ति तस्य प्रथमो मंत्रः का० १९।५।१९ ओंप्राणपाम इत्यस्य प्रजापति

**उपयामगृहीतोस्यश्विभ्यान्त्वा सरस्वत्यैत्वेन्द्रायत्वा सुत्राम्णा एषते योनिरश्विभ्यान्त्वा सरस्वत्यै त्वेन्द्रायत्वा सुत्राम्णे ॥ ३३॥ प्राणपामेऽअपानपाश्चक्षुष्पाः श्रोत्रपाश्चमे। वाचो मेविश्वभेषजो मनसोसि विलायकः ॥ ३४॥**

**अश्विनकृतस्यते सरस्वति कृतस्येन्द्रेण सुत्राम्णा कृतस्य। उपहूत उपहूतस्य भक्षयामि॥३५॥**

ऋषिरनुष्टुप् छन्दो ग्रहो देवता १ **मंत्रार्थः** हे ग्रह आत्मप्रतिविंब वात्वं [1](मे) [2](प्राणपाः) प्राण रक्षकः [3](अपानपाः) [4](चक्षुष्पाः) [5](च) [6](मे) [7](श्रोत्रपाः) [8](मे) [9](वाचः) [10](विश्व भेषजः) सर्वौषधिरूपः [11](च) [12](मनसः) [13](विलायकः) विषयेभ्यो निवर्त्तकः [14](असि) ॥ ३४॥ द्वितीयो मंत्रः ओंअश्विन कृतस्येत्यस्य प्रजापतिऋषिरुपरिष्टाद्बृहती छन्दो ग्रहो देवता १

**मंत्रार्थः** हे ग्रह आत्मप्रतिविंब वा [1](उपहूतः) आह्वातोहमात्मा [2](अश्विन कृतस्य) अश्विनाभ्यां नरनारायणाभ्या



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

म्वासंस्कृतस्य (सरस्वति कृतस्य) सरस्वत्या महावाचा वा संस्कृतस्य (सुत्राम्णा) सुष्ठु रक्षकेन (इन्द्रेण) इन्द्रेण महा-
नारायणेन वा (कृतस्य) संस्कृतस्य (उपहूतस्य) ऋत्विग्भिर्वागा ऋत्विग्भिर्वा कृतोपहवस्य (ते) तव। कर्मणि षष्ठी
(भक्षयामि) भक्षणं करोमि॥ ३५॥ अध्वर्यवं समाप्तम् इतः सौत्रामणिकं हौत्रमुच्यते एकादशऋचः प्रथमस्यैन्द्रस्य
पशोराप्रियः प्रयाजयाज्यास्तासु प्रथमा का० १९। ६। १२ ओंसमिद्ध इत्यस्याङ्गिरस ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता १

**मंत्रार्थः** (समिद्धः) सन्दीप्तः (उषसाम्) (अनीके) मुखे प्रातः काले (पुरो रुचा) अग्रेप्रसरन्त्या दीप्त्या (पूर्वकृत्) आदि-
त्यात्मना पूर्वस्याः कर्त्ता। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः (त्रिभिः) (त्रिंशता) (देवैः) सह (वावृधानः) वर्धमानः। वृधेर्वि-

**समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः। त्रिभिर्देवैस्त्रिंशता**
**वज्रवाहुर्जघान वृत्रं विदुरो ववार॥ ३६॥ नराशंसः प्रति शूरो मिमानस्त**

करणाव्यत्ययेन शपः तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः संहितायाम् (वज्रवाहुः) वज्रपाणिः (इन्द्रः) (वृत्रं) मेघं
दैत्यं वा (जघान) हतवान् (दुरः) मेघस्य द्वाराणि स्रोतांसि दैत्यपुरद्वाराणि वा। द्वारशब्दस्य सम्प्रसारणे दुर इति रूपम्
(विववार) विवृतान्यकरोत् शून्यान्यकरोद्वा॥ ३६॥ **अथाध्यात्मम्** — (समिद्धः) सम्यक् दीप्तः (उषसाम्)
(अनीके) समाधिकाले (पुरोरुचा) अग्रेप्रसरन्त्या दीप्त्या (पूर्वकृत्) उदयं कुर्वन् (त्रिभिः) (त्रिंशता) (देवैः) चतुर्दशे-
न्द्रियैर्दशप्राणैस्त्रिगुणैस्त्रिदेहैर्जीवेशप्रतिविंवैश्च (वावृधानः) वर्धमानः (वज्रवाहुः) ज्ञानवज्रधारी (इन्द्रः) आत्म-
रूपयजमानः। आत्मा वै यज्ञस्य यजमानः श० ९। ५। २। १६ (वृत्रं) पापं। पाप्मा वै वृत्रः श० १३। ४। १। १३ (जघान)

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

[१४] (द्वुरः) कमल द्वाराणि (विववार) [१५] विवृतान्य करोत् ॥३६॥ ओं नराशंस इत्यस्याङ्गिरस ऋरषिस्त्रिष्टुप् छन्दस्तनूनपा द्देवता १ **मंत्रार्थः** य आत्माग्निः (नराशंसः) [१] वागाद्यृत्विग्भिः स्तुतः (भूरेः) [२] योग भूरः (प्रतिमिमानः) [३] जीवस्य मिद्भावं प्रापकः (तनूनपात्) [४] तनोति विस्तार यति ब्रह्माण्डं स तनूमहा नारायणस्तस्य पुत्रो विष्णुस्तस्य पुत्र आत्मा यद्वा देहस्य रक्षकः (यज्ञस्य) [५] (धाम) [६] यज्ञ पुरुषस्य तेजः (गोभिः) [७] इन्द्रियैः (वपा वान्) [८] (मधुना) [९] ज्ञानेन। श० १४ ५।५।१६ (समञ्जन्) [१०] हवींषि भक्षयन् (हिरण्यैः) [११] इन्द्रिय शक्तिभिः। हिरण्यं ज्योतिः श० ६।७।१।२ (चन्द्री) [१२] सुवर्णी दाक्षिणा वान्नास्ति तमा त्माग्निं (प्रचेताः) [१३] विज्ञान वान्नात्म प्रतिविंवः (प्रतियजति) [१४] ॥ ३७॥

नूनपा॒त्प्रति य॒ज्ञस्य॒ धाम। गोभि॒र्व॒पावा॒न्मधु॑ना सम॒ञ्जन्हिर॑ण्यैश्च॒न्द्री य॑जति॒ प्रचे॑ताः ॥३७॥ ई॒डि॒तो दे॒वैर्हरि॑वाँ२॥ अभि॒ष्टिरा॒जुह्वा॑नो ह॒विषा॒ शर्द्ध॑मानः। पु॒र॒न्द॒रो गो॑त्र॒भिद्वज्र॑बाहु॒रा या॑तु य॒ज्ञमुप॑ नो जु॒षा॒णः। ३८।

ओं ईडित इत्यस्याङ्गिरस ऋरषिस्त्रिष्टुप् छन्दोऽग्निर्देवता १ **मंत्रार्थः** (देवैः) [१] (ईडितः) [२] पूजितः स्तुतः (हरिवान्) [३] अश्व वान् (अभिष्टिः) [४] समन्तात्स्तुतः। स्तौ ते रौणादिको डि प्रत्ययः (हविषा) [५] निमित्तेन हविर्निमित्तं (आजुह्वानः) [६] ऋत्विग्भिराहूयमानः (शर्धमानः) [७] अति वलायमानः (पुरन्दरः) [८] रिपुनगरं दारयतिसः (गोत्रभित्) [९] असुर कुलानां भेत्ता (वज्र वाहुः) [१०] वज्रधरः (नः) [११] अस्माकं (यज्ञम्) [१२] (उपजुषाणः) [१३] उपसेवमान इन्द्रः (आयातु) [१४] आगच्छतु ॥ ३८॥

**अथाध्यात्मम्** – (देवैः) [१] वागाद्यृत्विग्भिः (ईडितः) [२] पूजितः (हरिवान्) [३] प्राणवान् श० ५।२।४।६ (अभिष्टिः) [४] (अ-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आत्मा (भ) प्रकाश आत्मप्रकाश एवेष्टिर्यस्य सः (हविषा) आत्मप्रति विंवार्पण निमित्तं (आजुह्वानः) वागाद्युत्विग्भिराहू-
यमानः (शर्धमानः) अति वलायमानः (पुरन्दरः) कामनगरं दारयतिसः (गोत्रभित्) कामकुलस्य नाशकः (वज्रबाहुः) ज्ञा
नवज्रधरः (नः) अस्माकं वागाद्युत्विजां (यज्ञम्) योगयज्ञं (उपजुषाणः) आत्मा (आयातु) प्रादुर्भवतु ॥ ३८॥

ओंजुषाण इत्यस्याङ्गिरस ऋषिर्निचृत्त्रिष्टुप् छन्द इन्द्रो देवता १

**मंत्रार्थः** (हरिवान्) अश्व युक्तः (उरुप्रथाः) विस्तीर्णख्यातिः (सजोषाः) प्रीत्या सहितः (इन्द्रः) (पृथिव्याः)
स्वर्गस्य निघ० (प्रदिशा) मार्गेण (आदित्यैः) (वसुभिः) (अक्तं) म्रक्षितम् (प्रथमानं) विस्तीर्णं (स्योनम्) सुखरूपं (व-

**जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीन छं सीदत्प्रदिशा पृथिव्याः उरुप्रथाः प्र-**
**थमान छं स्योनमादित्यैरक्तं वसुभिः सजोषाः ॥ ३९॥ इन्द्रं दुरः कवष्यो धा**
**वमाना वृषाणं यन्तु जनयः सुपत्नीः। द्वारो देवीरभितो विश्रयन्तां छं सुवीरा वी**

र्हिः) अन्तरिक्षं निघ० (जुषाणः) सेवमानः। शानच्चिशपोलुक् (नः) अस्माकं (प्राचीनं) प्राग्भवं प्रदेशं (सीदत्) सीद-
तु आस्ताम् इतश्च लोप इति इलोपः ॥ ३९॥ **अथाध्यात्मम्** – (हरिवान्) प्राणवान् (उरुप्रथाः) महायशाः
(सजोषाः) सन्तुष्टः (इन्द्रः) आत्मरूप यजमानः (पृथिव्याः) देहस्य (प्रदिशा) प्राणमार्गेण (आदित्यैः) कमलस्थैर्दे
वैः (वसुभिः) कमलैः (अक्तं) व्याप्तं (प्रथमानं) विस्तीर्णं (स्योनम्) सुखरूपं (बर्हिः) सुषुम्नां (जुषाणः) (नः) अस्माकं
वागाद्युत्विजां (प्राचीनं) मानसकमलं (सीदत्) ॥ ३९॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ओं इन्द्रमित्यस्याङ्गिरसऋषिर्भुरिक् त्रिष्टुप्छन्द इन्द्रो देवता १

**मंत्रार्थः** [1](कवष्यः) कुशब्दे कूयन्ते कुवन्ति शब्दयन्ति जना या सुता: कवष्यः ससुषिराः सच्छिद्रे एव शब्दप्रसरात् कौते रोएणादिको ऽषट्प्रत्ययः [2](दुरः) यन्त्र ग्रह द्वाराणि [3](वृषाणं) वर्षितारं [4](वीरं) शूरं [5](इन्द्रम्) [6](यन्तु) प्राप्नुवन्तु [7]यथा [8](धावमानाः) (सुपत्नीः) शोभनाः साध्व्यः पत्न्यो यन्ते सहाधिकारिण्यः [9](जनयः) जायाः स्त्रियः [10]तथा (सुवीराः) शोभना वीरा ऋत्विजो या सुताः ऋत्विग्युक्ताः [11](महोभिः) तेजोभिरुत्सवैर्वा [12](प्रथमानाः) विस्तृताः [13](द्वारः) [14](देवीः) देव्यः [15](अभितः) सर्वत्र [16](विश्रयन्तां) विवृता भवन्तु ॥ ४० ॥ **अथाध्यात्मम्** [1](कवष्यः) अनाहत शब्द पूरितानि [2](दुरः)

**रम्प्रथमाना महोभिः ॥ ४० ॥ उषासानक्ता बृहती बृहन्तम्पयस्वती सुदुघे शूरमिन्द्रम् । तन्तन्ततम्पे शसा संवयन्ती देवानान्देवंव्यजतः सुरुक्मे ॥ ४१ ॥**

कमल द्वाराणि [3](वृषाणं) अमृत वृष्टि कर्त्तारं [4](वीरं) जितेन्द्रियं [5](इन्द्रम्) आत्मानं [6](यन्तु) प्राप्नुवन्तु यथा [7](धावमानाः) [8](सुपत्नीः) [9](जनयः) तथा [10](सुवीराः) देवैरधिष्ठिताः [11](महोभिः) तेजोभिः [12](प्रथमानाः) विस्तृताः [13](द्वारः) [14](देवीः) कमलद्वाराणि [15](अभितः) सर्वत्र [16](विश्रयन्तां) विवृताः भवन्तु ॥ ४० ॥

ओं उषासानक्ता इत्यस्याङ्गिरसऋषिस्त्रिष्टुप्छन्द उषासानक्ता देवते १ **मंत्रार्थः** [1](बृहती) बृहत्यौ [2](पयस्वती) उदकवत्यौ अवश्यायवत्यौ [3](सुदुघे) शोभनं दुग्धः ते दुहः कव्घश्चेति कप्घादेशश्च [4](ततं) विस्तीर्णं [5](तन्तुम्)



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

